शत्रुं संहर मां रक्ष श्रीमन्नापदमुद्धर ॥ १३ ॥ ॐ हरिमर्कट मर्कट मन्त्रमिदं परिलिख्यति लिख्यति वामतले । यदि नश्यति नश्यति शत्रुकुलं यदि मुञ्चति मुञ्चति वामलता ॥ १४ ॥ ॐ हरिमर्कटाय स्वाहा । ॐ नमो भगवते पञ्चवदनाय पूर्वकपिमुखाय सकलशत्रुसंहारकाय स्वाहा । ॐ नमो भगवते पञ्चवदनाय दक्षिणमुखाय करालवदनाय नरसिंहाय सकलभूतप्रमथनाय स्वाहा । ॐ नमो भगवते पञ्चवदनाय पश्चिममुखाय गरुडाननाय सकलविषहराय स्वाहा । ॐ नमो भगवते पञ्चवदनायोत्तरमुखायादिवराहाय सकलसंपत्कराय स्वाहा । ॐ नमो भगवते पञ्चवदनायोर्ध्वमुखाय हयग्रीवाय सकलजनवशंकराय स्वाहा । ॐ अस्य श्रीपञ्चमुखहनुमन्मन्त्रस्य । श्रीरामचन्द्र ऋषिः । अनुष्टुप् छन्दः । पञ्चमुखवीरहनुमान् देवता । हनुमानिति बीजम् । वायुपुत्र इति शक्तिः । अञ्जनीसुत इति कीलकम् । श्रीरामदूतहनुमत्प्रसादसिद्ध्यर्थे जपे विनियोगः ॥ इति ऋष्यादिकं विन्यसेत् । ॐ अञ्जनीसुताय अङ्गुष्ठाभ्यां नमः । ॐ रुद्रमूर्तये तर्जनीभ्यां नमः । ॐ वायुपुत्राय मध्यमाभ्यां नमः । ॐ अग्निगर्भाय अनामिकाभ्यां नमः । ॐ रामदूताय कनिष्ठिकाभ्यां नमः । ॐ पञ्चमुखहनुमते करतलकरपृष्ठाभ्यां नमः । इति करन्यासः ॥ ॐ अञ्जनीसुताय हृदयाय नमः । ॐ रुद्रमूर्तये शिरसे स्वाहा । ॐ वायुपुत्राय शिखायै वषट् । ॐ अग्निगर्भाय कवचाय हुम् । ॐ रामदूताय नेत्रत्रयाय वौषट् । ॐ पञ्चमुखहनुमते अस्त्राय फट् । पञ्चमुखहनुमते स्वाहा ॥ इति दिग्बन्धः ॥ अथ ध्यानम् ॥ वन्दे वानरनारसिंहखगराट्क्रोडाश्ववक्त्रान्वितं दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा । हस्ताब्जैरसिखेटपुस्तकसुधाकुम्भाङ्कुशाद्रिं हलं खट्वाङ्गं

फणिभूरुहं दशभुजं सर्वारिवीरापहम् ॥ इति ॥ अथ मन्त्रः ॥ ॐ श्रीरामदूतायाञ्जनेयाय वायुपुत्राय महाबलपराक्रमाय सीता-दुःखनिवारणाय लङ्कादहनकारणाय महाबलप्रचण्डाय फाल्गुन-सखाय कोलाहलसकलब्रह्माण्डविश्वरूपाय सप्तसमुद्रनिर्लङ्घनाय पिङ्गलनयनायामितविक्रमाय सूर्यबिम्बफलसेवनाय दुष्टनिवारणाय दृष्टिनिरालंकृताय सञ्जीविनीसञ्जीविताङ्गदलक्ष्मणमहाकपिसैन्य-प्राणदाय दशकण्ठविध्वंसनाय रामेष्टाय महाफाल्गुनसखाय सीता-सहितरामवरप्रदाय षट्प्रयोगागमपञ्चमुखवीरहनुमन्मन्त्रजपे विनि-योगः ॥ ॐ हरिमर्कटमर्कटाय बंबंबंबंबं वौषट् स्वाहा । ॐ हरि-मर्कटमर्कटाय फंफंफंफंफं फट्स्वाहा । ॐ हरिमर्कटमर्कटाय खेंखेंखें-खेंखें मारणाय स्वाहा । ॐ हरिमर्कटमर्कटाय लुंलुंलुंलुंलुं आक-र्षितसकलसम्पत्कराय स्वाहा । ॐ हरिमर्कटमर्कटाय धंधंधंधंधं शत्रुस्तम्भनाय स्वाहा । ॐ टंटंटंटंटं कूर्ममूर्तये पञ्चमुखवीरहनुमते परयन्त्रपरतन्त्रोच्चाटनाय स्वाहा । ॐ कंखंगंघंङं चंछंजंझंञं टंठंडंढंणं तंथंदंधंनं पंफंबंभंमं यंरंलंवं शंषंसंहं ळंक्षं स्वाहा । इति दिग्बन्धः ॥ ॐ पूर्वकपिमुखाय पञ्चमुखहनुमते टंटंटंटंटं सकलशत्रुसंहरणाय स्वाहा । ॐ दक्षिणमुखाय पञ्चमुखहनुमते करालवदनाय नर-सिंहाय ॐ ह्रांह्रींह्रूंह्रैंह्रौंह्रः सकलभूतप्रेतदमनाय स्वाहा । ॐ पश्चिम-मुखाय गरुडाननाय पञ्चमुखहनुमते मंमंमंमंमं सकलविषहराय स्वाहा । ॐ उत्तरमुखायादिवराहाय लंलंलंलंलं नृसिंहाय नील-कण्ठमूर्तये पञ्चमुखहनुमते स्वाहा । ॐ ऊर्ध्वमुखाय हयग्रीवाय रुंरुंरुंरुंरुं रुद्रमूर्तये सकलप्रयोजननिर्वाहकाय स्वाहा । ॐ अञ्जनी-सुताय वायुपुत्राय महाबलाय सीताशोकनिवारणाय श्रीरामचन्द्र-कृपापादुकाय महावीर्यप्रमथनाय ब्रह्माण्डनाथाय कामदाय पञ्च-

मुखवीरहनुमते स्वाहा । भूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिन्यन्तरिक्षग्रहपरयन्त्रपरतन्त्रोच्चाटनाय स्वाहा । सकलप्रयोजननिर्वाहकाय पञ्चमुखवीरहनुमते श्रीरामचन्द्रवरप्रसादाय जंजंजंजंजं स्वाहा । इदं कवचं पठित्वा तु महाकवचं पठेन्नरः । एकवारं जपेत्स्तोत्रं सर्वशत्रुनिवारणम् ॥ १५ ॥ द्विवारं तु पठेन्नित्यं पुत्रपौत्रप्रवर्धनम् । त्रिवारं च पठेन्नित्यं सर्वसंपत्करं शुभम् ॥ १६ ॥ चतुर्वारं पठेन्नित्यं सर्वरोगनिरणम् । पञ्चवारं पठेन्नित्यं सर्वलोकवशङ्करम् ॥ १७ ॥ षड्वारं च पठेन्नित्यं सर्वदेववशङ्करम् । सप्तवारं पठेन्नित्यं सर्वसौभाग्यदायकम् ॥ १८ ॥ अष्टवारं पठेन्नित्यमिष्टकामार्थसिद्धिदम् । नववारं पठेन्नित्यं राजभोगमवाप्नुयात् ॥ १९ ॥ दशवारं पठेन्नित्यं त्रैलोक्यज्ञानदर्शनम् । रुद्रावृत्तिं पठेन्नित्यं सर्वसिद्धिर्भवेद्ध्रुवम् ॥ २० ॥ निर्बलो रोगयुक्तश्च महाव्याध्यादिपीडितः । कवचस्मरणेनैव महाबलमवाप्नुयात् ॥ २१ ॥ इति श्रीसुदर्शनसंहितायां श्रीरामचन्द्रसीताप्रोक्तं श्रीपञ्चमुखहनुमत्कवचं संपूर्णम् ॥

## ३२१. हनुमल्लांगूलास्त्रस्तोत्रम् ।

श्रीगणेशाय नमः ॥ हनुमन्नञ्जनीसूनो महाबलपराक्रम । लोलल्लांगूलपातेन ममारातीन्निपातय ॥ १ ॥ मर्कटाधिप मार्तण्डमण्डलग्रासकारक । लोल० ॥ २ ॥ अक्षक्षपण पिङ्गाक्ष दितिजासुक्षयंकर । लोल० ॥ ३ ॥ रुद्रावतारसंसारदुःखभारापहारक । लोल० ॥ ४ ॥ श्रीरामचरणाम्भोजमधुपायितमानस । लोल० ॥ ५ ॥ वालिप्रमथनक्लान्तसुग्रीवोन्मोचनप्रभो । लोल० ॥ ६ ॥ सीताविरहवारीशभग्नसीतेशतारक । लोल० ॥ ७ ॥ रक्षोराजप्रतापाग्निदह्यमानजगद्वन । लोल० ॥ ८ ॥ ग्रस्ताशेषजगत्स्वास्थ्य राक्षसाम्भोधिमन्दर ।

लोल० ॥९॥ पुच्छगुच्छस्फुरद्वीर जगद्दग्धारिपत्तन । लोल० ॥१०॥ जगन्मनोदुरुल्लङ्घ्यापारावारविलङ्घन । लोल० ॥ ११ ॥ स्मृतमात्र-समस्तेष्टपूरक प्रणतप्रिय । लोल० ॥ १२ ॥ रात्रिंचरतमोरात्रिकृन्त-नैकविकर्तन । लोल० ॥ १३ ॥ जानक्या जानकीजानेः प्रेमपात्र परंतप । लोल० ॥ १४ ॥ भीमादिकमहाभीमवीरावेशावतारक । लोल० ॥ १५ ॥ वैदेहीविरहक्लान्तरामरोषैकविग्रह । लोल० ॥१६॥ वज्राङ्गनखदंष्ट्रेश वज्रिवज्रावगुण्ठन । लोल० ॥ १७ ॥ अखर्वगर्व-गन्धर्वपर्वतोद्भेदनस्वर । लोल० ॥ १८ ॥ लक्ष्मणप्राणसंत्राण त्रात-तीक्ष्णकरान्वय । लोल० ॥ १९ ॥ रामादिविप्रयोगार्त भरताद्यार्ति-नाशन । लोल० ॥ २० ॥ द्रोणाचलसमुत्क्षेपसमुत्क्षिप्तारिवैभव । लोल० ॥ २१ ॥ सीताशीर्वादसंपन्न समस्तावयवाक्षत । लोल-लांगूलपातेन ममारातीन्निपातय ॥ २२ ॥ इत्येवमश्वत्थतलोपविष्टः शत्रुंजयं नाम पठेत्स्वयं यः । स शीघ्रमेवास्तसमस्तशत्रुः प्रमोदते मारुतजप्रसादात् ॥ २३ ॥ इति श्रीहनुमल्लांगूलास्त्रस्तोत्रं संपूर्णम् ॥

## ३२२. एकादशमुखहनुमत्कवचम् ।

श्रीगणेशाय नमः ॥ लोपामुद्रा उवाच ॥ कुम्भोद्भव दयासिन्धो श्रुतं हनुमतः परम् । यन्त्रमन्त्रादिकं सर्वं त्वन्मुखोदीरितं मया ॥ १ ॥ दयां कुरु मयि प्राणनाथ वेदितुमुत्सहे । कवचं वायुपुत्रस्य एकादशमुखात्मनः ॥ २ ॥ इत्येवं वचनं श्रुत्वा प्रियायाः प्रश्रया-न्वितम् । वक्तुं प्रचक्रमे तत्र लोपामुद्रां प्रति प्रभुः ॥ ३ ॥ अगस्त्य उवाच ॥ नमस्कृत्वा रामदूतं हनूमन्तं महामतिम् । ब्रह्मप्रोक्तं तु कवचं शृणु सुन्दरि सादरम् ॥ ४ ॥ सनन्दनाय सुमहच्चतुरानन-भाषितम् । कवचं कामदं दिव्यं रक्षःकुलनिबर्हणम् ॥ ५ ॥ सर्वसंपत्प्रदं पुण्यं मर्त्यानां मधुरस्वरे । अस्य श्रीकवचस्यैकादश-

वक्रस्य धीमतः ॥ ६ ॥ हनूमत्स्तुतिमन्त्रस्य सनन्दन ऋषिः स्मृतः । प्रसन्नात्मा हनूमांश्च देवता परिकीर्तिता ॥ ७ ॥ छन्दोऽनुष्टुप् समाख्यातं बीजं वायुसुतस्तथा । मुख्यः प्राणः शक्तिरिति विनियोगः प्रकीर्तितः ॥ ८ ॥ सर्वकामार्थसिद्ध्यर्थं जप एवमुदीरयेत् । ॐ स्फ्रैंबीजं शक्तिधृक् पातु शिरो मे पवनात्मजः ॥ ९ ॥ क्रौंबीजात्मा नयनयोः पातु मां वानरेश्वरः । क्षंबीजरूपः कर्णौ मे सीताशोकविनाशनः ॥ १० ॥ ग्लौंबीजवाच्यो नासां मे लक्ष्मणप्राणदायकः । वंबीजार्थश्च कण्ठं मे पातु चाक्षयकारकः ॥ ११ ॥ रांबीजवाच्यो हृदयं पातु मे कपिनायकः । वंबीजकीर्तितः पातु बाहू मे चाञ्जनीसुतः ॥ १२ ॥ ह्रीँबीजो राक्षसेन्द्रस्य दर्पहा पातु चोदरम् । ह्सौंबीजमयो मध्यं पातु लङ्काविदाहकः ॥ १३ ॥ ॐ ह्रीँ बीजधरः पातु गुह्यं देवेन्द्रवन्दितः । रंबीजात्मा सदा पातु चोरू मे वार्धिलङ्घनः ॥ १४ ॥ सुग्रीवसचिवः पातु जानुनी मे मनोजवः । पादौ पादतले पातु द्रोणाचलधरो हरिः । आपादमस्तकं पातु रामदूतो महाबलः ॥ १५ ॥ पूर्वे वानरवक्त्रो मामाग्नेय्यां क्षत्रियान्तकृत् । दक्षिणे नारसिंहस्तु नैर्ऋत्यां गणनायकः ॥ १६ ॥ वारुण्यां दिशि मामव्यात्खगवक्त्रो हरीश्वरः । वायव्यां भैरवमुखः कौबेर्यां पातु मां सदा ॥ १७ ॥ क्रोडास्यः पातु मां नित्यमैशान्यां रुद्ररूपधृक् । ऊर्ध्वं हयाननः पातु गुह्याधः सुमुखस्तथा ॥ १८ ॥ रामास्यः पातु सर्वत्र सौम्यरूपो महाभुजः । इत्येवं रामदूतस्य कवचं यः पठेत्सदा ॥ १९ ॥ एकादशमुखस्यैतद्गोप्यं ते कीर्तितं मया । रक्षोघ्नं कामदं सौम्यं सर्वसंपद्विधायकम् ॥ २० ॥ पुत्रदं धनदं चोग्रशत्रुसंघविमर्दनम् । स्वर्गापवर्गदं दिव्यं चिन्तितार्थप्रदं शुभम् ॥ २१ ॥ एतत्कवचमज्ञात्वा मन्त्रसिद्धिर्न

जायते । चत्वारिंशत्सहस्राणि पठेच्छुद्धात्मको नरः ॥ २२ ॥ एकवारं पठेन्नित्यं कवचं सिद्धिदं पुमान् । द्विवारं वा त्रिवारं वा पठन्नायुष्यमाप्नुयात् ॥ २३ ॥ क्रमादेकादशादेवमावर्तनजपात्सुधीः । वर्षान्ते दर्शनं साक्षाल्लभते नात्र संशयः ॥ २४ ॥ यं यं चिन्तयते चार्थं तं तं प्राप्नोति पूरुषः । ब्रह्मोदीरितमेतद्धि तवाग्रे कथितं महत् ॥ २५ ॥ इत्येवमुक्त्वा वचनं महर्षिस्तूष्णीं बभूवेन्दुमुखीं निरीक्ष्य । संहृष्टचित्तापि तदा तदीयपादौ ननामातिमुदा स्वभर्तुः ॥ २६ ॥ अथ मन्त्रः ॥ ओं स्फ्रें क्रौं क्ष्रौं ग्लौं वं रां वां ह्रौँ ह्राँ रं । स्फ्रें क्रों क्ष्रौं ग्लौं क्ष्रीं क्ष्रौं दुं हां हलौं ह्रीँ रं । इत्यगस्त्यसारसंहितायामेकादशमुखहनुमत्कवचं संपूर्णम् ॥

## ३२३. हनुमदष्टकम् ।

श्रीगणेशाय नमः ॥ श्रीरघुराजपदाब्जनिकेतन पंकजलोचन मंगलराशे चंडमहाभुजदंडसुरारिविखंडनपंडित पाहि दयालो । पातकिनं च समुद्धर मां महतां हि सतामपि मानमुदारं त्वां भजतो मम देहि दयाघन हे हनुमत्स्वपदाम्बुजदास्यम् ॥ १ ॥ संसृतितापमहानलदग्धतनूरुहमर्मतनोरतिवेलं पुत्रधनस्वजनात्मगृहादिषु सक्तमतेरतिकिल्बिषमूर्तेः । केनचिदप्यमलेन पुराकृतपुण्यसुपुञ्जलवेन विभो वै त्वां भजतो० ॥ २ ॥ संसृतिकूपमनल्पमघोनिदाघनिदानमजस्रमशेषं प्राप्य सुदुःखसहस्रभुजंगविषैकसमाकुलसर्वतनोर्मे । घोरमहाकृपणापदमेव गतस्य हरे पतितस्य भवाब्धौ त्वां भजतो० ॥ ३ ॥ संसृतिसिन्धुविशालकरालमहाबलकालझषग्रसनार्तं व्यग्रसमग्रधियं कृपणं च महामदनक्रसुचक्रहृतासुम् । कालमहारसनोर्मिनिपीडितमुद्धर दीनमनन्यगतिं मां त्वां भजतो० ॥ ४ ॥ संसृतिघोरमहागहने चरतो मणिरञ्जितपुण्यसुमूर्तेर्मन्मथ-

भीकरघोरमहोग्रमृगप्रवरार्दितगात्रसुसन्धेः । मत्सरतापविशेषनिपीडितबाह्यमतेश्च कथंचिदमेयं त्वां भजतो० ॥ ५ ॥ संसृतिवृक्षमनेकशताघनिदानमनन्तविकर्मसुशाखं दुःखफलं करणादिपलाशमनङ्गसुपुष्पमचिन्त्यसुमूलम् । तं ह्यधिरुह्य हरे पतितं शरणागतमेव विमोचय मूढं त्वां भजतो० ॥ ६ ॥ संसृतिपन्नगवक्त्रभयंकरदंष्ट्रमहाविषदग्धशरीरं प्राणविनिर्गमभीतिसमाकुलमन्धमनाथमतीव विषण्णम् । मोहमहाकुहरे पतितं दययोद्धर मामजितेंद्रियकामं त्वां भजतो० ॥ ७ ॥ इन्द्रियनामकचौरगणैर्हृततत्त्वविवेकमहाधनराशिं संसृतिजालनिपातितमेव महाबलिभिश्च विखंडितकायम् । त्वत्पदपद्ममनुत्तममाश्रितमाशु कपीश्वर पाहि कृपालो त्वां भजतो० ॥ ८ ॥ ब्रह्ममरुद्गणरुद्रमहेन्द्रकिरीटसुकोटिलसत्पदपीठं दाशरथिं जपति क्षितिमंडल एष निधाय सदैव हृदब्जे । तस्य हनूमत एव शिवंकरमष्टकमेतदनिष्टहरं वै यः सततं हि पठेत्स नरो लभतेऽच्युतरामपदाब्जनिवासम् ॥ ९ ॥ इति श्रीमधुसूदनाश्रमशिष्याच्युतविरचितं श्रीमद्धनुमदष्टकं संपूर्णम् ॥

## ३२४. हनुमत्पंचरत्नस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वीताखिलविषयेच्छं जातानंदाश्रुपुलकमत्यच्छम् । सीतापतिदूताद्यं वातात्मजमद्य भावये हृद्यम् ॥ १ ॥ तरुणारुणमुखकमलं करुणारसपूरपूरितापांगम् । संजीवनमाशासे मंजुलमहिमानमंजनाभाग्यम् ॥ २ ॥ शंबरवैरिशरातिगमंबुजदलविपुललोचनोदारम् । कंबुगलमनिलदिष्टं बिंबोज्ज्वलितोष्ठमेकमवलं ॥ ३ ॥ दूरीकृतसीतार्तिः प्रकटीकृतरामवैभवस्फूर्तिः । दारितदशमुखकीर्तिः पुरतो मम भातु हनुमतो मूर्तिः ॥ ४ ॥ वानर

निकराध्यक्षं दानवकुलकुमुदरविकरसदृक्षम् । दीनजनावनदीक्षं पवनतपःपाकपुंजमद्राक्षम् ॥ ५ ॥ एतत्पवनसुतस्य स्तोत्रं यः पठति पंचरत्नाख्यम् । चिरमिह निखिलान्भोगान् भुंक्त्वा श्रीरामभक्तिभाग्भवति ॥ ६ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ हनुमत्पंचरत्नस्तोत्रं संपूर्णम् ॥

*

# कृष्णस्तोत्राणि ।



श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयो
धियां साक्षी शुद्धो हरिरसुरहंताब्जनयनः ।
गदी शंखी चक्री विमलवनमाली स्थिररुचिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥

# कृष्णस्तोत्राणि ।

## ३२५. त्रैलोक्यमंगलकवचम् ।

श्रीगणेशाय नमः॥ नारद उवाच। भगवन्सर्वधर्मज्ञ कवचं यत्प्रकाशितम् । त्रैलोक्यमंगलं नाम कृपया कथय प्रभो ॥ १ ॥ सनत्कुमार उवाच ॥ शृणु वक्ष्यामि विप्रेंद्र कवचं परमाद्भुतम् । नारायणेन कथितं कृपया ब्रह्मणे पुरा ॥ २ ॥ ब्रह्मणा कथितं मह्यं परं स्नेहाद्वदामि ते । अतिगुह्यतरं तत्त्वं ब्रह्ममंत्रौघविग्रहम् ॥ ३ ॥ यद्धृत्वा पठनाद्ब्रह्मा सृष्टिं वितनुते ध्रुवम् । यद्धृत्वा पठनात्पाति महालक्ष्मीर्जगत्त्रयम् ॥ ४ ॥ पठनाद्धारणाच्छंभुः संहर्ता सर्वमंत्रवित् । त्रैलोक्यजननी दुर्गा महिषादिमहासुरान् ॥ ५ ॥ वरदृप्तान् जघानैव पठनाद्धारणाद्यतः । एवमिंद्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः ॥ ६ ॥ इदं कवचमत्यंतगुप्तं कुत्रापि नो वदेत् । शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥ ७ ॥ शठाय परशिष्याय दत्त्वा मृत्युमवाप्नुयात् । त्रैलोक्यमंगलस्यास्य कवचस्य प्रजापतिः ॥ ८ ॥ ऋषिश्छंदश्च गायत्री देवो नारायणः स्वयम् । धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥ ९ ॥ प्रणवो मे शिरः पातु नमो नारायणाय च । भालं मे नेत्रयुगलमष्टार्णो भुक्तिमुक्तिदः ॥ १० ॥ क्लीं पायाच्छ्रोत्रयुग्मं चैकाक्षरः सर्वमोहनः । क्लीं कृष्णाय सदा घ्राणं गोविंदायेति जिह्विकाम् ॥ ११ ॥ गोपीजनपदवल्लभाय स्वाहाननं मम । अष्टादशाक्षरो मंत्रः कंठं पातु दशाक्षरः ॥ १२ ॥ गोपीजनपदवल्लभाय स्वाहा भुजद्वयम् । क्लीं ग्लौं क्लीं श्यामलांगाय नमः स्कन्धौ दशाक्षरः ॥ १३ ॥ क्लीं कृष्णः क्लीं करौ पायात् क्लीं कृष्णो मां गतोऽवतु । हृदयं भुवनेशानः क्लीं कृष्णः

क्लीं स्तनौ मम ॥ १४ ॥ गोपालायाग्निजायांतं कुक्षियुग्मं सदाऽवतु । क्लीं कृष्णाय सदा पातु पार्श्वयुग्ममनुत्तमः ॥ १५ ॥ कृष्णगोविंदकौ पातां स्मराद्यौ ङेयुतौ मनुः । अष्टाक्षरः पातु नाभिं कृष्णेति द्व्यक्षरोऽवतु ॥ १६ ॥ पृष्ठं क्लीं कृष्णकं गल्लं क्लीं कृष्णाय द्विठान्तकः । सक्थिनी सततं पातु श्रीं ह्रीं क्लीं कृष्णठद्वयम् ॥ १७ ॥ ऊरू सप्ताक्षरः पायात्रयोदशाक्षरोऽवतु । श्रीं ह्रीं क्लीं पदतो गोपीजनवल्लभदन्ततः ॥ १८ ॥ भाय स्वाहेति पायुं वै क्लीं ह्रीं श्रीं सदशार्णकः । जानुनी च सदा पातु ह्रीं श्रीं क्लीं च दशाक्षरः ॥ १९ ॥ त्रयोदशाक्षरः पातु जंघे चक्राद्युदायुधः । अष्टादशाक्षरो ह्रीं-श्रीं-पूर्वको विंशदर्णकः ॥ २० ॥ सर्वांगं मे सदा पातु द्वारकानायको बली । नमो भगवते पश्चाद्वासुदेवाय तत्परम् ॥ २१ ॥ ताराद्यो द्वादशार्णोऽयं प्राच्यां मां सर्वदाऽवतु । श्रीं ह्रीं क्लीं च दशार्णस्तु ह्रीं क्लीं श्रीं षोडशार्णकः ॥ २२ ॥ गदाद्युदायुधो विष्णुर्मामग्नेर्दिशि रक्षतु । ह्रीं श्रीं दशार्णमंत्रोऽयं दक्षिणे मां सदाऽवतु ॥ २३ ॥ तारो नमो भगवते रुक्मिणीवल्लभाय च । स्वाहेति षोडशार्णोऽयं नैर्ऋत्यां दिशि रक्षतु ॥ २४ ॥ क्लीं हृषीके पदं शाय नमो मां वारुणोऽवतु । अष्टादशार्णः कामान्तो वायव्ये मां सदाऽवतु ॥ २५ ॥ श्रीं मायाकामकृष्णाय गोविंदाय द्विठो मनुः । द्वादशार्णात्मको विष्णुरुत्तरे मां सदाऽवतु ॥ २६ ॥ वाग्भवं कामकृष्णाय ह्रीं गोविंदाय तत्परम् । श्रीं गोपीजनवल्लभांताय स्वाहा हस्तौ ततः ॥ २७ ॥ द्वाविंशत्यक्षरो मंत्रो मामैशान्ये सदाऽवतु । कालियस्य फणामध्ये दिव्यं नृत्यं करोति तम् ॥ २८ ॥ नमामि देवकीपुत्रं नृत्यराजानमच्युतम् । द्वात्रिंशदक्षरो मंत्रोऽप्यधो मां सर्वदाऽवतु ॥ २९ ॥

कामदेवाय विद्महे पुष्पबाणाय धीमहि । तन्नोऽनंगः प्रचोदयादेषा मां पातु चोर्ध्वतः ॥ ३० ॥ इति ते कथितं विप्र ब्रह्ममंत्रौघविग्रहम् । त्रैलोक्यमंगलं नाम कवचं ब्रह्मरूपकम् ॥ ३१ ॥ ब्रह्मणा कथितं पूर्वं नारायणमुखाच्छ्रुतम् । तव स्नेहान्मयाख्यातं प्रवक्तव्यं न कस्यचित् ॥ ३२ ॥ गुरुं प्रणम्य विधिवत्कवचं प्रपठेत्ततः । सकृद्द्विस्त्रिर्यथाज्ञानं स हि सर्वतपोमयः ॥ ३३ ॥ मंत्रेषु सकलेष्वेव देशिको नात्र संशयः । शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः ॥३४॥ हवनादीन्दशांशेन कृत्वा तत्साधयेद्ध्रुवम् । यदि स्यात्सिद्धकवचो विष्णुरेव भवेत्स्वयम् ॥ ३५ ॥ मंत्रसिद्धिर्भवेत्तस्य पुरश्चर्याविधानतः । स्पर्धामुद्धूय सततं लक्ष्मीर्वाणीं वसेत्ततः ॥ ३६ ॥ पुष्पांजल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत् । दशवर्षसहस्राणि पूजायाः फलमाप्नुयात् ॥ ३७ ॥ भूर्जे विलिख्यांगुलिकां स्वर्णस्थां धारयेद्यदि । कंठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ॥ ३८ ॥ अश्वमेधसहस्राणि वाजपेयशतानि च । महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ॥ ३९ ॥ कलां नार्हंति तान्येव सकृदुच्चारणात्ततः । कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ॥ ४० ॥ त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् । इदं कवचमज्ञात्वा यजेद्यः पुरुषोत्तमम् । शतलक्षं प्रजप्तोऽपि न मंत्रस्तस्य सिध्यति ॥ ४१ ॥ इति श्रीनारदपंचरात्रे ज्ञानामृतसारे त्रैलोक्यमंगलं नाम कवचं संपूर्णम् ॥

## ३२६. श्रीबालरक्षा ।

श्रीगणेशाय नमः ॥ श्रीकृष्णाय नमः ॥ अव्यादजोंऽघ्रिर्मणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः । हृत्केशवस्त्वदुर ईश इनस्तु कंठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥ १ ॥

चन्त्रयग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽ-जनश्च। कोणेषु शंख उरुगाय उपर्युपेंद्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समंतात् ॥ २ ॥ इंद्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु। श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ ३ ॥ पृश्निगर्भश्च ते बुद्धिमात्मानं भगवान्परः। क्रीडंतं पातु गोविंदः शयानं पातु माधवः ॥ ४ ॥ व्रजंतमव्याद्वैकुंठ आसीनं त्वां श्रियःपतिः। भुंजानं यज्ञभुक् पातु सर्वग्रहभयंकरः ॥ ५ ॥ डाकिन्यो यातु-धान्यश्च कूष्मांडा येऽर्भकग्रहाः। भूतप्रेतपिशाचाश्च यक्षरक्षो-विनायकाः ॥ ६ ॥ कोटरारेवतीज्येष्ठापूतनामातृकादयः। उन्मादा ये ह्यपस्मारा देहप्राणेंद्रियद्रुहः ॥ ७ ॥ स्वप्नदृष्टा महोत्पाता वृद्ध-बालग्रहाश्च ये। सर्वे नश्यंतु ते विष्णोर्नामग्रहणभीरवः ॥ ८ ॥ इति श्रीमद्भागवते दशमस्कंधे गोपीकृतबालरक्षा संपूर्णा ॥

## ३२७. श्रीकृष्णस्तवराजः।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच ॥ शृणु देवि प्रवक्ष्यामि स्तोत्रं परमदुर्लभम्। यज्ज्ञात्वा न पुनर्गच्छेन्नरो निरययातनाम् ॥ १ ॥ नारदाय च यत्प्रोक्तं ब्रह्मपुत्रेण धीमता। सनत्कुमारेण पुरा योगींद्रगुरुवर्त्मना ॥ २ ॥ श्रीनारद उवाच ॥ प्रसीद भग-वन्मह्यमज्ञानात्कुंठितात्मने। तवांघ्रिपंकजरजोरागिणीं भक्तिमुत्त-माम् ॥ ३ ॥ अज प्रसीद भगवन्नमितद्युतिपंजर। अप्रमेय प्रसीदा-स्मद्दुःखहन्पुरुषोत्तम ॥ ४ ॥ स्वसंवेद्य प्रसीदास्मदानंदात्मन्ननना-मय। अचिन्त्यसार विश्वात्मन्प्रसीद परमेश्वर ॥ ५ ॥ प्रसीद तुंग तुंगानां प्रसीद शिव शोभन। प्रसीद गुणगंभीर गंभीराणां महा-द्युते ॥ ६ ॥ प्रसीद व्यक्त विस्तीर्ण विस्तीर्णानामगोचर। प्रसीदा-र्द्रार्द्रजातीनां प्रसीदांतांतदायिनाम् ॥ ७ ॥ गुरोर्गरीयः सर्वेश

प्रसीदानंत देहिनाम् । जय माधव मायात्मन् जय शाश्वत शंखभृत् ॥ ८ ॥ जय शंखधर श्रीमन् जय नंदकनंदन । जय चक्रगदापाणे जय देव जनार्दन ॥ ९ ॥ जय रत्नवराबद्धकिरीटाक्रांतमस्तक । जय पक्षिपतिच्छायानिरुद्धार्ककरारुण ॥ १० ॥ नमस्ते नरकाराते नमस्ते मधुसूदन । नमस्ते ललितापांग नमस्ते नरकांतक ॥ ११ ॥ नमः पापहरेशान नमः सर्वभयापह । नमः संभूतसर्वात्मन्नमः संभृतकौस्तुभ ॥ १२ ॥ नमस्ते नयनातीत नमस्ते भयहारक । नमो विभिन्नवेषाय नमः श्रुतिपथातिग ॥ १३ ॥ नमस्त्रिमूर्तिभेदेन सर्गस्थित्यंतहेतवे । विष्णवे त्रिदशारातिजिष्णवे परमात्मने ॥ १४ ॥ चक्रभिन्नारिचक्राय चक्रिणे चक्रवल्लभ । विश्वाय विश्ववंद्याय विश्वभूतानुवर्तिने ॥ १५ ॥ नमोऽस्तु योगिध्येयात्मन्नमोऽस्त्वध्यात्मरूपिणे । भक्तिप्रदाय भक्तानां नमस्ते भक्तिदायिने ॥ १६ ॥ पूजनं हवनं चेज्या ध्यानं पश्चान्नमस्क्रिया । देवेश कर्म सर्वं मे भवेदाराधनं तव ॥ १७ ॥ इति हवनजपार्चाभेदतो विष्णुपूजानियतहृदयकर्मा यस्तु मंत्री चिराय । स खलु सकलकामान् प्राप्य कृष्णांतरात्मा जननमृतिविमुक्तोऽप्युत्तमां भक्तिमेति ॥ १८ ॥ गोगोपगोपिकावीतं गोपालं गोषु गोप्रदम् । गोपैरीड्यं गोसहस्रैर्नौमि गोकुलनायकम् ॥ १९ ॥ प्रीणयेदनया स्तुत्या जगन्नाथं जगन्मयम् । धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमम् ॥ २० ॥ इति श्रीनारदपंचरात्रे ज्ञानामृतसारे श्रीकृष्णस्तवराजः संपूर्णः ॥

## ३२८. भगवन्मानसपूजनम् ।

श्रीगणेशाय नमः ॥ हृदंभोजे कृष्णः सजलजलदश्यामलतनुः सरोजाक्षः स्रग्वी मुकुटकटकाद्याभरणवान् । शरद्राकानाथप्रतिम-

वदनः श्रीमुरलिकां वहन्ध्येयो गोपीगणपरिवृतः कुंकुमचितः ॥ १ ॥ पयोंभोधेर्द्वीपान्मम हृदयमायाहि भगवन् मणिव्रातभ्राजत्कनकवर-पीठं भज हरे । सुचिह्नौ ते पादौ यदुकुलज नेनेज्मि सुजलैर्गृहाणेदं दूर्वाफलजलवदर्घ्यं मुररिपो ॥ २ ॥ त्वमाचामोपेंद्र त्रिदश-सरिदंभोऽतिशिशिरं भजस्वेमं पंचामृतरचितमाप्लावमघहन् । द्युनद्याः कालिंद्या अपि कनककुंभस्थितमिदं जलं तेन स्नानं कुरु कुरु कुरुष्वाचमनकम् ॥ ३ ॥ तडिद्वर्णे वस्त्रे भयविजयकांताधि-हरण प्रलंबारिभ्रातर्मृदुलमुपवीतं कुरु गले । ललाटे पाटीरं मृग-मदयुतं धारय हरे गृहाणेदं माल्यं शतदलतुलस्यादिरचितम् ॥ ४ ॥ दशांगं धूपं सद्वरदचरणाग्रेऽर्पितमये मुखं दीपेनेंदुप्रभ-वरजसा देव कलये । इमौ पाणी वाणीपतिनुत सकर्पूररजसा विशोध्याग्रे दत्तं सलिलमिदमाचाम नृहरे ॥ ५ ॥ सदातृप्तान्नं षड्रसवदखिलव्यंजनयुतं सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम् । यशोदासूनो तत्परमदयाऽशान सखिभिः प्रसादं वाञ्छद्भिः सह तदनु नीरं पिब विभो ॥ ६ ॥ सचंद्रं तांबूलं मुखरुचिकरं भक्षय हरे फलं स्वादु प्रीत्या परिमलवदास्वादय चिरम् । सपर्यापर्याप्त्यै कनकमणिजातं स्थितमिदं प्रदीपैरारार्तिं जलधितनयाश्लिष्ट रचये ॥ ७ ॥ विजातीयैः पुष्पैरभिसुरभिभिर्बिल्वतुलसीयुतैश्चेमं पुष्पां-जलिमजित ते मूर्ध्नि निदधे । तव प्रादक्षिण्यक्रमणमघविध्वंसि रचितं चतुर्वारं विष्णो जनिपथगतिश्रांतविदुषा ॥ ८ ॥ नमस्कारो-ऽष्टांगः सकलदुरितध्वंसनपटुः कृतं नृत्यं गीतं स्तुतिरपि रमा-कांत त इमम् । तव प्रीत्यै भूयादहमपि च दासस्तव विभो कृतं छिद्रं पूर्णं कुरु कुरु नमस्तेऽस्तु भगवन् ॥ ९ ॥ सदा सेव्यः कृष्णः सजलघननीलः करतले दधानो दध्यन्नं तदनु नवनीतं मुरलि-

काम् । कदाचित्कान्तानां कुचकलशपत्रालिरचनासमासक्तं स्निग्धैः सह शिशुविहारं विरचयन् ॥ १० ॥ मणिकर्णीच्छया जातमिदं मानसपूजनम् । यः कुर्वीतोषसि प्राज्ञस्तस्य कृष्णः प्रसीदति ॥ ११ ॥ इति श्रीमच्छंकराचार्यविरचितं भगवन्मानसपूजनं संपूर्णम् ॥

## ३२९. देवकृता गर्भस्तुतिः ।

श्रीगणेशाय नमः ॥ देवा ऊचुः ॥ जगद्योनिरयोनिस्त्वमनंतोऽव्यय एव च । ज्योतिःस्वरूपो ह्यनिशः सगुणो निर्गुणो महान् ॥ १ ॥ भक्तानुरोधात्साकारो निराकारो निरंकुशः । निर्व्यूहो निखिलाधारो निःशंको निरुपद्रवः ॥ २ ॥ निरुपाधिश्च निर्लिप्तो निरीहो निधनांतकः । स्वात्मारामः पूर्णकामोऽनिमिषो नित्य एव च ॥ ३ ॥ स्वेच्छामयः सर्वहेतुः सर्वः सर्वगुणाश्रयः । सर्वदो दुःखदो दुर्गो दुर्जनांतक एव च ॥ ४ ॥ सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः । वेदहेतुश्च वेदश्च वेदांगो वेदविद्विभुः ॥ ५ ॥ इत्येवमुक्त्वा देवाश्च प्रणेमुश्च मुहुर्मुहुः । हर्षाश्रुलोचनाः सर्वे ववृषुः कुसुमानि च ॥ ६ ॥ द्विचत्वारिंशन्नामानि प्रातरुत्थाय यः पठेत् । दृढां भक्तिं हरेर्दास्यं लभते वांछितं फलम् ॥ ७ ॥ इत्येवं स्तवनं कृत्वा देवास्ते स्वालयं ययुः । बभूव जलवृष्टिश्च निश्चेष्टा मथुरा पुरी ॥ ८ ॥ इति देवकृता गर्भस्तुतिः संपूर्णा ॥

## ३३०. वसुदेवकृतं श्रीकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वसुदेव उवाच ॥ त्वामतींद्रियमव्यक्तमक्षरं निर्गुणं विभुम् । ध्यानासाध्यं च सर्वेषां परमात्मानमीश्वरम् ॥ १ ॥ स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम् । निर्लिप्तं परमं ब्रह्म बीजरूपं सनातनम् ॥ २ ॥ स्थूलात्स्थूलतरं प्राप्तमतिसूक्ष्मम-

दर्शनम् । स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकम् ॥ ३ ॥ शरीरवंतं सगुणमशरीरं गुणोत्करम् । प्रकृतिं प्रकृतीशं च प्राकृतं प्रकृतेः परम् ॥ ४ ॥ सर्वेशं सर्वरूपं च सर्वांतकरमव्ययम् । सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभुम् ॥ ५ ॥ अनंतः स्तवनेऽशक्तोऽशक्ता देवी सरस्वती । यं वा स्तोतुमशक्तश्च पंचवक्त्रः षडाननः ॥ ६ ॥ चतुर्मुखो वेदकर्ता यं स्तोतुमक्षमः सदा । गणेशो न समर्थश्च योगींद्राणां गुरोर्गुरुः ॥ ७ ॥ ऋषयो देवताश्चैव मुनींद्रमनुमानवाः । स्वप्ने तेषामदृश्यं च त्वामेवं किं स्तुवंति ते ॥ ८ ॥ श्रुतयः स्तवनेऽशक्ताः किं स्तुवंति विपश्चितः । विहायैवं शरीरं च बालो भवितुमर्हसि ॥ ९ ॥ वसुदेवकृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः । भक्तिं दास्यमवाप्नोति श्रीकृष्णचरणांबुजे ॥ १० ॥ विशिष्टं पुत्रं लभते हरिदासं गुणान्वितम् । संकटं निस्तरेत्तूर्णं शत्रुभीतेः प्रमुच्यते ॥ ११ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे वसुदेवकृतं कृष्णस्तोत्रं संपूर्णम् ॥

## ३३१. श्रीवेंकटेश्वरमंगलस्तोत्रम् ।

श्रीवेंकटेश्वराय नमः ॥ श्रियः कांताय देवाय कल्याणनिधयेऽर्थिनाम् । श्रीवेंकटनिवासाय श्रीनिवासाय मंगलम् ॥ १ ॥ लक्ष्मीसविभ्रमालोकसुभ्रूविभ्रमचक्षुषे । चक्षुषे सर्वलोकानां वेंकटेशाय मंगलम् ॥ २ ॥ श्रीवेंकटाद्रिशृंगाय मंगलाभरणांघ्रये । मंगलानां निवासाय श्रीनिवासाय मंगलम् ॥ ३ ॥ सर्वावयवसौंदर्यसंपदा सर्वचेतसाम् । सदा संमोहनायास्तु वेंकटेशाय मंगलम् ॥ ४ ॥ नित्याय निरवद्याय सत्यानंतचिदात्मने । सर्वांतरात्मने श्रीमद्वेंकटेशाय मंगलम् ॥ ५ ॥ स्वतः सर्वविदे सर्वशक्तये सर्वशेषिणे । सुलभाय सुशीलाय वेंकटेशाय मंगलम् ॥ ६ ॥ परस्मै ब्रह्मणे

पूर्णकामाय परमात्मने । प्रसन्नपरतत्त्वाय वेंकटेशाय मंगलम् ॥७॥ अकालतत्त्वविश्रांतावात्मानमनुपश्यताम् । अतृप्तामृतरूपाय वेंकटेशाय मंगलम् ॥ ८ ॥ प्रायः स्वचरणौ पुंसां शरणत्वेन पाणिना । कृपया दृश्यते श्रीमद्वेंकटेशाय मंगलम् ॥ ९ ॥ दयामृततरंगिण्यस्तरंगैरपि शीतलैः । अपांगैः सिंचते विश्वं वेंकटेशाय मंगलम् ॥ १० ॥ स्रग्भूषांबरहेतीनां सुषमावहमूर्तये । सर्वार्तिशमनायास्तु वेंकटेशाय मंगलम् ॥ ११ ॥ श्रीवैकुंठविरक्ताय स्वामिपुष्करिणीतटे । रमया रममाणाय वेंकटेशाय मंगलम् ॥ १२ ॥ श्रीमत्सुंदरजामातृमुनिमानसवासिने । सर्वलोकनिवासाय श्रीनिवासाय मंगलम् ॥ १३ ॥ नमः श्रीवेंकटेशाय शुद्धज्ञानस्वरूपिणे । वासुदेवाय शांताय श्रीनिवासाय मंगलम् ॥ १४ ॥ मंगलाशासनपरैर्मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मंगलम् ॥ १५ ॥ इति श्रीवेंकटेशमंगलस्तोत्रं संपूर्णम् ॥

## ३३२. बालकृतं कृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ बाला ऊचुः ॥ यथा संरक्षितं ब्रह्मन्सर्वापत्स्वेव नः कुलम् । तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन ॥ १ ॥ त्वमिष्टदेवताऽस्माकं त्वमेव कुलदेवता । स्रष्टा दाता च संहर्ता जगतां च जगत्पते ॥ २ ॥ वह्निर्वा वरुणो वापि चंद्रो वा सूर्य एव च । यमः कुबेरः पवन ईशानाद्याश्च देवताः ॥ ३ ॥ ब्रह्मेशशेषधर्मेन्द्रा मुनींद्रा मनवः स्मृताः । मानवाश्च तथा दैत्या यक्षराक्षसकिंनराः ॥ ४ ॥ ये ये चराचराश्चैव सर्वे तव विभूतयः । आविर्भावस्तिरोभावः सर्वेषां च तवेच्छया ॥ ५ ॥ अभयं देहि गोविंद वह्निसंहरणं कुरु । वयं त्वां शरणं यामो रक्ष नः शरणागतान् ॥ ६ ॥ इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा पदांबुजम् । दूरीभूतस्तु दावाग्निः

श्रीकृष्णामृतदृष्टितः ॥ ७ ॥ दूरीभूते च दावाग्नौ ननृतुस्ते मुदान्विताः । सर्वापदः प्रणश्यंति हरिस्मरणमात्रतः ॥ ८ ॥ इदं स्तोत्रं महापुण्यं प्रातरुत्थाय यः पठेत् । वह्नितो न भवेत्तस्य भयं जन्मनि जन्मनि ॥ ९ ॥ शत्रुग्रस्ते च दावाग्नौ विपत्तौ प्राणसंकटे । स्तोत्रमेतत्पठित्वा तु मुच्यते नात्र संशयः ॥ १० ॥ शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत् । इह लोके हरेर्भक्तिमंते दास्यं लभेद्ध्रुवम् ॥ ११ ॥ इति बालकृतं श्रीकृष्णस्तोत्रं संपूर्णम् ॥

## ३३३. गोपालस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीनारद उवाच ॥ नवीननीरदश्यामं नीलेंदीवरलोचनम् । बल्लवीनंदनं वंदे कृष्णं गोपालरूपिणम् ॥ १ ॥ स्फुरद्बर्हिदलोद्बद्धनीलकुंचितमूर्धजम् । कदंबकुसुमोद्बद्धवनमालाविभूषितम् ॥ २ ॥ गंडमंडलसंसर्गिचलत्कांचनकुंडलम् । स्थूलमुक्ताफलोदारहारोद्द्योतितवक्षसम् ॥ ३ ॥ हेमांगदतुलाकोटिकिरीटोज्ज्वलविग्रहम् । मंदमारुतसंक्षोभवल्गितांबरसंचयम् ॥ ४ ॥ रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः । लसद्गोपालिकाचेतो मोहयंतं मुहुर्मुहुः ॥ ५ ॥ बल्लवीवदनांभोजमधुपानमधुव्रतम् । क्षोभयंतं मनस्तासां सस्मेरापांगवीक्षणैः ॥ ६ ॥ यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परम् । विचित्रांबरभूषाभिर्गोपनारीभिरावृतम् ॥ ७ ॥ प्रभिन्नांजनकालिंदीदलकेलिकलोत्सुकम् । योधयंतं क्वचिद्गोपान् व्याहरंतं गवां गणम् ॥ ८ ॥ कालिंदीजलसंसर्गिशीतलानिलसेविते । कदंबपादपच्छाये स्थितं वृंदावने क्वचित् ॥ ९ ॥ रत्नभूधरसंलग्नरत्नासनपरिग्रहम् । कल्पपादपमध्यस्थहेममंडपिकागतम् ॥ १० ॥ वसंतकुसुमामोदसुरभीकृतदिङ्मुखे । गोवर्धनगिरौ रम्ये स्थितं रासरसोत्सुकम् ॥ ११ ॥ सव्यहस्ततलन्यस्तगिरिवर्यात-

पत्रकम् । खंडिताखंडलोन्मुक्तामुक्तासारघनाघनम् ॥ १२ ॥ वेणुवाद्यमहोल्लासकृतहुंकारनिःस्वनैः । सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितम् ॥ १३ ॥ कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्तिभिः । दंडपाशोद्यतकरैर्गोपालैरुपशोभितम् ॥ १४ ॥ नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदांगपारगैः । प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परम् ॥ १५ ॥ य एनं चिंतयेद्देवं भक्त्या संस्तौति मानवः । त्रिसंध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् ॥ १६ ॥ राजवल्लभतामेति भवेत्सर्वजनप्रियः । अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् ॥ १७ ॥ इति श्रीनारदपंचरात्रे ज्ञानामृतसारे गोपालस्तोत्रं समाप्तम् ॥

## ३३४. कृष्णाष्टकम् ।

श्रीगणेशाय नमः ॥ श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयो धियां साक्षी शुद्धो हरिरसुरहंताब्जनयनः । गदी शंखी चक्री विमलवनमाली स्थिररुचिः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ १ ॥ यतः सर्वं जातं वियदनिलमुख्यं जगदिदं स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा । लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ २ ॥ असूनायम्यादौ यमनियममुख्यैः सुकरणैर्निरुध्येदं चित्तं हृदि विलयमानीय सकलम् । यमीड्यं पश्यंति प्रवरमतयो मायिनमसौ शरण्यो लोकेशो मम० ॥ ३ ॥ पृथिव्यां तिष्ठन्यो यमयति महीं वेद न धरा यमित्यादौ वेदो वदति जगतामीशममलम् । नियंतारं ध्येयं मुनिसुरनृणां मोक्षदमसौ शरण्यो लोकेशो मम० ॥ ४ ॥ महेंद्रादिर्देवो जयति दितिजान्यस्य बलतो न कस्य स्वातंत्र्यं क्वचिदपि कृतौ यत्कृतिमृते । कवित्वादेर्गर्वं

परिहरति योऽसौ विजयिनः शरण्यो लोकेशो मम० ॥ ५ ॥ विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां विना यस्य ज्ञानं जनमृतिभयं याति जनता । विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः शरण्यो लोकेशो मम० ॥ ६ ॥ नरातंकोत्तंकः शरणशरणो भ्रांतिहरणो घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः । स्वयंभूर्भूतानां जनक उचिताचारसुखदः शरण्यो लोकेशो मम० ॥ ७ ॥ यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः । सतां धाता स्वच्छो निगमगुणगीतो व्रजपतिः शरण्यो लोकेशो मम० ॥ ८ ॥ इति हरिरखिलात्माराधितः शंकरेण श्रुतिविशदगुणोऽसौ मातृमोक्षार्थमाद्यः । यतिवरनिकटे श्रीयुक्त आविर्बभूव स्वगुणवृत उदारः शंखचक्राब्जहस्तः ॥ ९ ॥ इति श्रीमच्छंकराचार्यविरचितं कृष्णाष्टकं संपूर्णम् ॥

## ३३५. मोहिनीकृतं श्रीकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मोहिन्युवाच ॥ सर्वेंद्रियाणां प्रवरं विष्णोरंशं च मानसम् । तदेव कर्मणां बीजं तदुद्भव नमोऽस्तु ते ॥ १ ॥ स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः । नमो ब्रह्मन् जगत्स्रष्टस्तदुद्भव नमोऽस्तु ते ॥ २ ॥ सर्वाजित जगज्जेतर्जीवजीव मनोहर । रतिबीज रतिस्वामिन् रतिप्रिय नमोऽस्तु ते ॥ ३ ॥ शश्वद्योषिदधिष्ठान योषित्प्राणाधिकप्रिय । योषिद्वाहन योषास्त्र योषिद्बंधो नमोऽस्तु ते ॥ ४ ॥ पतिसाध्यकराशेषरूपाधार गुणाश्रय । सुगंधिवातसचिव मधुमित्र नमोऽस्तु ते ॥ ५ ॥ शश्वद्योनिकृताधार स्त्रीसंदर्शनवर्धन । विदग्धानां विरहिणां प्राणांतक नमोऽस्तु ते ॥ ६ ॥ अकृपा येषु तेऽनर्थं तेषां ज्ञानं विनाशनम् । अनूहरूपभक्तेषु कृपासिंधो नमोऽस्तु ते ॥ ७ ॥

तपस्विनां च तपसां विघ्नबीजाय लीलया। मनः सकामं मुक्तानां कर्तुं शक्त नमोऽस्तु ते ॥ ८ ॥ तपःसाध्यस्तथाराध्यः सदैव पांचभौतिकः। पंचेंद्रियकृताधार पंचबाण नमोऽस्तु ते ॥ ९ ॥ मोहिनीत्येवमुक्त्वा तु मनसा सा विधेः पुराः। विरराम नम्रवक्त्रा बभूव ध्यानतत्परा ॥ १० ॥ उक्तं माध्यंदिने कांते स्तोत्रमेतन्मनोहरम्। पुरा दुर्वाससा दत्तं मोहिन्यै गंधमादने ॥ ११ ॥ स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत्। अभीष्टं लभते नूनं निष्कलंको भवेद्ध्रुवम् ॥ १२ ॥ चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम्। भवेदरोगी श्रीयुक्तः कामदेवसमप्रभः। वनितां लभते साध्वीं पत्नीं त्रैलोक्यमोहिनीम् ॥ १३ ॥ इति श्रीमोहिनीकृतं कृष्णस्तोत्रं समाप्तम् ॥

## २३६. ब्रह्मदेवकृतं कृष्णस्तोत्रम्।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच ॥ रक्ष रक्ष हरे मां च निमग्नं कामसागरे। दुष्कीर्तिजलपूर्णे च दुष्पारे बहुसंकटे ॥ १ ॥ भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे। अतीव निर्मलज्ञानचक्षुःप्रच्छन्नकारणे ॥ २ ॥ जन्मोर्मिसंगसहिते योषिन्नक्रौघसंकुले। रतिस्रोतःसमायुक्ते गंभीरे घोर एव च ॥ ३ ॥ प्रथमामृतरूपे च परिणामविषालये। यमालयप्रवेशाय मुक्तिद्वारातिविस्मृतौ ॥ ४ ॥ बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम्। स्वयं च त्वं कर्णधारः प्रसीद मधुसूदन ॥ ५ ॥ मद्विधाः कतिचिन्नाथ नियोज्या भवकर्मणि। संति विश्वेश विधयो हे विश्वेश्वर माधव ॥ ६ ॥ न कर्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः। तथापि न स्पृहा कामे त्वद्भक्तिव्यवधायके ॥ ७ ॥ हे नाथ करुणासिंधो दीनबंधो कृपां कुरु। त्वं महेश महाज्ञाता दुःस्वप्नं मां न दर्शय ॥ ८ ॥ इत्युक्त्वा

जगतां धाता विरराम सनातनः । ध्यायं ध्यायं मत्पदाब्जं शश्वत्सस्मार मामिति ॥ ९ ॥ ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् । स चैवाकर्मविषये न निमग्नो भवेद्ध्रुवम् ॥ १० ॥ मम मायां विनिर्जित्य स ज्ञानं लभते ध्रुवम् । इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥ ११ ॥ इति श्रीब्रह्मदेवकृतं कृष्णस्तोत्रं संपूर्णम् ॥

## ३३७. श्रीकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वंदे नवघनश्यामं पीतकौशेयवाससम् । सानंदं सुंदरं शुद्धं श्रीकृष्णं प्रकृतेः परम् ॥ १ ॥ राधेशं राधिकाप्राणवल्लभं बल्लवीसुतम् । राधासेवितपादाब्जं राधावक्षःस्थलस्थितम् ॥ २ ॥ राधानुगं राधिकेष्टं राधापहृतमानसम् । राधाधारं भवाधारं सर्वाधारं नमामि तम् ॥ ३ ॥ राधाहृत्पद्ममध्ये च वसंतं संततं शुभम् । राधासहचरं शश्वद्राधाज्ञापरिपालकम् ॥ ४ ॥ ध्यायंते योगिनो योगान् सिद्धाः सिद्धेश्वराश्च यम् । तं ध्यायेत्सततं शुद्धं भगवंतं सनातनम् ॥ ५ ॥ सेवंते सततं संतो ब्रह्मेशशेषसंज्ञकाः । सेवंते निर्गुणं ब्रह्म भगवंतं सनातनम् ॥ ६ ॥ निर्लिप्तं च निरीहं च परमात्मानमीश्वरम् । नित्यं सत्यं च परमं भगवंतं सनातनम् ॥ ७ ॥ यं सृष्टेरादिभूतं च सर्वबीजं परात्परम् । योगिनस्तं प्रपद्यंते भगवंतं सनातनम् ॥ ८ ॥ बीजं नानावताराणां सर्वकारणकारणम् । वेदावेद्यं वेदबीजं वेदकारणकारणम् । योगिनस्तं प्रपद्यंते भगवंतं सनातनम् ॥ ९ ॥ इत्येवमुक्त्वा गंधर्वः पपात धरणीतले । ननाम दंडवद्भूमौ देवदेवं परात्परम् ॥ १० ॥ इति तेन कृतं स्तोत्रं यः पठेत्प्रयतः शुचिः । इहैव जीवन्मुक्तश्च परं याति परां गतिम् ॥ ११ ॥ हरिभक्तिं हरेर्दास्यं गोलोके च

निरामयः। पार्षदप्रवरत्वं च लभते नात्र संशयः॥ १२॥ इति श्रीनारदपंचरात्रे श्रीकृष्णस्तोत्रं संपूर्णम्॥

## ३३८. श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम्।

श्रीगणेशाय नमः॥ अस्य श्रीकृष्णाष्टोत्तरशतनामस्तोत्रस्य श्रीशेष ऋषिः। अनुष्टुप् छंदः। श्रीकृष्णो देवता। श्रीकृष्णप्रीत्यर्थे श्रीकृष्णाष्टोत्तरशतनामजपे विनियोगः। शेष उवाच॥ श्रीकृष्णः कमलानाथो वासुदेवः सनातनः। वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः॥ १॥ श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः। चतुर्भुजात्तचक्रासिगदाशंखांबुजायुधः॥ २॥ देवकीनंदनः श्रीशो नंदगोपप्रियात्मजः। यमुनावेगसंहारी बलभद्रप्रियानुजः॥ ३॥ पूतनाजीवितहरः शकटासुरभंजनः। नंदव्रजजनानंदी सच्चिदानंदविग्रहः॥ ४॥ नवनीतनवाहारो मुचुकुंदप्रसादकः। षोडशस्त्रीसहस्रेशस्त्रिभंगो मधुराकृतिः॥ ५॥ शुकवागमृताब्धींदुर्गोविंदो गोविदां पतिः। वत्सपालनसंचारी धेनुकासुरभंजनः॥ ६॥ तृणीकृततृणावर्तो यमलार्जुनभंजनः। उत्तालतालभेत्ता च तमालश्यामलाकृतिः॥ ७॥ गोपगोपीश्वरो योगी सूर्यकोटिसमप्रभः। इलापतिः परंज्योतिर्यादवेंद्रो यदूद्वहः॥ ८॥ वनमाली पीतवासाः पारिजातापहारकः। गोवर्धनाचलोद्धर्ता गोपालः सर्वपालकः॥ ९॥ अजो निरंजनः कामजनकः कंजलोचनः। मधुहा मथुरानाथो द्वारकानायको बली॥ १०॥ वृंदावनांतःसंचारी तुलसीदामभूषणः। स्यमंतकमणेर्हर्ता नरनारायणात्मकः॥ ११॥ कुब्जाकृष्णांबरधरो मायी परमपूरुषः। मुष्टिकासुरचाणूरमहायुद्धविशारदः॥ १२॥ संसारवैरी कंसारिर्मुरारिर्नरकांतकः। अनादिर्ब्रह्मचारी च कृष्णाव्यसनकर्षकः॥ १३॥ शिशुपालशिरश्छेत्ता

दुर्योधनकुलांतकृत् । विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ॥ १४ ॥ सत्यवाक् सत्यसंकल्पः सत्यभामारतो जयी । सुभद्रापूर्वजो विष्णु-र्भीष्ममुक्तिप्रदायकः ॥ १५ ॥ जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः । वृषभासुरविध्वंसी बाणासुरबलांतकृत् ॥ १६ ॥ युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः । पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ॥ १७ ॥ कालीयफणिमाणिक्यरंजितश्रीपदांबुजः । दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः ॥ १८ ॥ नारायणः परं ब्रह्म पन्नगाशनवाहनः । जलक्रीडासमासक्तगोपीवस्त्रापहारकः ॥ १९ ॥ पुण्यश्लोकस्तीर्थकरो वेदवेद्यो दयानिधिः । सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः ॥२०॥ इत्येवं कृष्णदेवस्य नाम्नामष्टोत्तरं शतम् । कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा ॥ २१ ॥ स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया पुरा । कृष्णनामामृतं नाम परमानंददायकम् ॥ २२ ॥ अनुपद्रव-दुःखघ्नं परमायुष्यवर्धनम् । दानं श्रुतं तपस्तीर्थं यत्कृतं त्विह जन्मनि ॥ २३ ॥ पठतां शृण्वतां चैव कोटिकोटिगुणं भवेत् । पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् ॥ २४ ॥ धनावहं दरिद्राणां जयेच्छूनां जयावहम् । शिशूनां गोकुलानां च पुष्टिदं पुष्टिवर्धनम् ॥ २५ ॥ वातग्रहज्वरादीनां शमनं शांतिमुक्तिदम् । समस्तकामदं सद्यः कोटिजन्माघनाशनम् ॥ २६ ॥ अन्ते कृष्णस्मरणदं भवताप-भयापहम् । कृष्णाय यादवेंद्राय ज्ञानमुद्राय योगिने । नाथाय रुक्मिणीशाय नमो वेदांतवेदिने ॥ २७ ॥ इमं मंत्रं महादेव जप-न्नेव दिवानिशम् । सर्वग्रहानुग्रहभाक् सर्वप्रियतमो भवेत् ॥ २८ ॥ पुत्रपौत्रैः परिवृतः सर्वसिद्धिसमृद्धिमान् । निर्विश्य भोगानंतेऽपि कृष्णसायुज्यमाप्नुयात् ॥ २९ ॥ इति श्रीनारदपंचरात्रे ज्ञानामृत-सारे उमामहेश्वरसंवादे धरणीशेषसंवादे श्रीकृष्णाष्टोत्तरशतनाम-स्तोत्रं संपूर्णम् ॥

## ३३९. इंद्रकृतं कृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ इंद्र उवाच ॥ अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम् । गुणातीतं निराकारं स्वेच्छामयमनंतकम् ॥ १ ॥ भक्तध्यानाय सेवायै नानारूपधरं वरम् । शुक्लरक्तपीतश्यामं युगानुक्रमणेन च ॥ २ ॥ शुक्लतेजः स्वरूपं च सत्ये सत्यस्वरूपिणम् । त्रेतायां कुंकुमाकारं ज्वलंतं ब्रह्मतेजसा ॥ ३ ॥ द्वापरे पीतवर्णं च शोभितं पीतवाससा । कृष्णवर्णं कलौ कृष्णं परिपूर्णतमं प्रभुम् ॥ ४ ॥ नवधाराधरोत्कृष्टश्यामसुंदरविग्रहम् । नंदैकनंदनं वंदे यशोदानंदनं प्रभुम् ॥ ५ ॥ गोपिकाचेतनहरं राधाप्राणाधिकं परम् । विनोदमुरलीशब्दं कुर्वंतं कौतुकेन च ॥ ६ ॥ रूपेणाप्रतिमेनैव रत्नभूषणभूषितम् । कंदर्पकोटिसौंदर्यं बिभ्रन्तं शांतमीश्वरम् ॥ ७ ॥ क्रीडंतं राधया सार्धं वृंदारण्ये च कुत्रचित् । कुत्रचिन्निर्जनेऽरण्ये राधावक्षःस्थलस्थितम् ॥ ८ ॥ जलक्रीडां प्रकुर्वंतं राधया सह कुत्रचित् । राधिकाकबरीभारं कुर्वंतं कुत्रचिद्वने ॥ ९ ॥ कुत्रचिद्राधिकापादे दत्तवंतमलक्तकम् । राधाचर्विततांबूलं गृह्णंतं कुत्रचिन्मुदा ॥ १० ॥ पश्यतं कुत्रचिद्राधां पश्यंतीं वक्रचक्षुषा । दत्तवंतं च राधायै कृत्वा मालां च कुत्रचित् ॥ ११ ॥ कुत्रचिद्राधया सार्धं गच्छंतं रासमंडलम् । राधादत्तां गले मालां धृतवंतं च कुत्रचित् ॥ १२ ॥ सार्धं गोपालिकाभिश्च विहरंतं च कुत्रचित् । राधां गृहीत्वा गच्छंतं तां विहाय च कुत्रचित् ॥ १३ ॥ विप्रपत्नीदत्तमन्नं भुक्तवंतं च कुत्रचित् । भुक्तवंतं तालफलं बालकैः सह कुत्रचित् ॥ १४ ॥ वस्त्रं गोपालिकानां च हरंतं कुत्रचिन्मुदा । गवां गणं व्याहरंतं कुत्रचिद्बालकैः सह ॥ १५ ॥ कालीयमूर्ध्नि पादाब्जं दत्तवंतं च कुत्रचित् । विनोदमुरलीशब्दं कुर्वंतं कुत्रचिन्मुदा ॥ १६ ॥

गायंतं रम्यसंगीतं कुत्रचिद्बालकैः सह । स्तुत्वा शक्रः स्तवेंद्रेण प्रणनाम हरिं भिया ॥ १७ ॥ पुरा दत्तेन गुरुणा रणे वृत्रासुरेण च । कृष्णेन दत्तं कृपया ब्रह्मणे च तपस्यते ॥ १८ ॥ एकादशाक्षरो मंत्रः कवचं सर्वलक्षणम् । दत्तमेतत्कुमाराय पुष्करे ब्रह्मणा पुरा ॥ १९ ॥ तेन चांगिरसे दत्तं गुरवेंऽगिरसां मुने । इदमिंद्रकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ॥ २० ॥ इह प्राप्य दृढां भक्तिमंते दास्यं लभेद्ध्रुवम् । जन्ममृत्युजराव्याधिशोकेभ्यो मुच्यते नरः ॥ २१ ॥ न हि पश्यति स्वप्नेऽपि यमदूतं यमालयम् ॥ २२ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे कृष्णजन्मखंडे इंद्रकृतं कृष्णस्तोत्रं संपूर्णम् ॥

## ३४०. विप्रपत्नीकृतं कृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विप्रपत्न्य ऊचुः ॥ त्वं ब्रह्म परमं धाम निरीहो निरहंकृतिः । निर्गुणश्च निराकारः साकारः सगुणः स्वयम् ॥ १ ॥ साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः । प्रकृतिः पुरुषस्त्वं च कारणं च तयोः परम् ॥ २ ॥ सृष्टिस्थित्यंतविषये ये च देवास्त्रयः स्मृताः । ते त्वदंशाः सर्वबीजा ब्रह्मविष्णुमहेश्वराः ॥ ३ ॥ यस्य लोम्नां च विवरे निखिलं विश्वमीश्वर । महाविराण्महाविष्णुस्त्वं तस्य जनको विभो ॥ ४ ॥ तेजस्त्वं चापि तेजस्वी ज्ञानं ज्ञानी च तत्परः । वेदेऽनिर्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥ ५ ॥ महदादिसृष्टिसूत्रं पंचतन्मात्रमेव च । बीजं त्वं सर्वशक्तीनां सर्वशक्तिस्वरूपकः ॥ ६ ॥ सर्वशक्तीश्वरः सर्वः सर्वशक्त्याश्रयः सदा । त्वमनीहः स्वयंज्योतिः सर्वानंदः सनातनः ॥ ७ ॥ अहो आकारहीनस्त्वं सर्वविग्रहवानपि । सर्वेंद्रियाणां विषयं जानासि नेंद्रियी भवान् ॥ ८ ॥ सरस्वती जडीभूता यत्स्तोत्रे यन्निरूपणे । जडीभूतो

महेशश्च शेषो धर्मो विधिः स्वयम् ॥ ९ ॥ पार्वती कमला राधा सावित्री वेदसूरपि । वेदश्च जडतां याति के वा शक्ता विपश्चितः ॥ १० ॥ वयं किं स्तवनं कुर्मः स्त्रियः प्राणेश्वरेश्वर । प्रसन्नो भव नो देव दीनबंधो कृपां कुरु ॥ ११ ॥ इति पेतुश्च ता विप्रपत्न्यस्तच्चरणांबुजे । अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः ॥ १२ ॥ विप्रपत्नीकृतं स्तोत्रं पूजाकाले च यः पठेत् । स गतिं विप्रपत्नीनां लभते नात्र संशयः ॥ १३ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे कृष्णजन्मखंडे विप्रपत्नीकृतं कृष्णस्तोत्रं संपूर्णम् ॥

## ३४१. गोपालविंशतिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी । वेदांताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥ १ ॥ वंदे वृंदावनचरं बल्लवीजनवल्लभम् । जयंतीसंभवं धाम वैजयंतीविभूषणम् ॥ २ ॥ वाचं निजांकरसिकां प्रसमीक्षमाणो वक्त्रारविंदविनिवेशितपांचजन्यः । वर्णत्रिकोणरुचिरे वरपुंडरीके बद्धासनो जयति बल्लवचक्रवर्ती ॥ ३ ॥ आम्नायगंधिरुचिरस्फुरिताधरोष्ठमस्राविलेक्षणमनुक्षणमंदहासम् । गोपालडिंभवपुषं कुहनाजनन्याः प्राणस्तनंधयमवैमि परं पुमांसम् ॥ ४ ॥ आविर्भवत्वनिभृताभरणं पुरस्तादाकुंचितैकचरणं निहितान्यपादम् । दध्ना निमन्थमुखरेण निबद्धतालं नाथस्य नंदभवने नवनीतनाट्यम् ॥ ५ ॥ कुंदप्रसूनविशदैर्दशनैश्चतुर्भिः संदश्य मातुरनिशं कुचचूचुकाग्रम् । नंदस्य वक्त्रमवलोकयतो मुरारेर्मंदस्मितं मम मनीषितमातनोतु ॥ ६ ॥ हर्तुं कुंभे विनिहितकरः स्वादु हैयंगवीनं दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् । पायादीषत्प्रचलितपदो नापगच्छन्न तिष्ठन् मिथ्यागोपः सपदि नयने मीलयन् विश्वगोप्ता ॥ ७ ॥ व्रजयोषिदपांगवेदनीयं मथुराभाग्य-

मनन्यभोग्यमीडे । वसुदेववधूस्तनंधयं तत् किमपि ब्रह्म किशोर-
भावदृश्यम् ॥ ८ ॥ परिवर्तितकंधरं भयेन स्मितफुल्लाधरपल्लवं
स्मरामि । विटपित्वनिरासकं कयोश्चिद्विपुलोलूखलकर्षकं कुमारम्
॥ ९ ॥ निकटेषु निशामयामि नित्यं निगमांतैरधुनापि मृग्यमाणम् ।
यमलार्जुनदृष्टबालकेलिं यमुनासाक्षिकयौवनं युवानम् ॥ १० ॥
पदवीमदवीयसीं विमुक्तेरटवीसंपदमंबु वाहयंतीम् । अरुणाधरसा-
भिलाषवंशां करुणां कारणमानुषीं भजामि ॥ ११ ॥ अनिमेष-
निषेवणीयमक्ष्णोरजहद्यौवनमाविरस्तु चित्ते । कलहायितकुंतलं
कलापैः करुणोन्मादकविभ्रमं मनो मे ॥ १२ ॥ अनुयायिमनोज्ञ-
वंशनालैरवतु स्पर्शितबल्लवीविमोहैः । अनघस्मितशीतलैरसौ माम-
नुकंपासरिदंबुजैरपांगैः ॥ १३ ॥ अधराहितचारुवंशनाला मुकुटा-
लंबिमयूरपिच्छमालाः । हरिनीलशिलाविहंगलीलाः प्रतिभास्संतु
ममांतिमप्रयाणे ॥ १४ ॥ अखिलानवलोकयामि कालान्महिला-
धीनभुजांतरस्य यूनः । अभिलाषपदं व्रजांगनानामभिलापक्रमदूर-
माभिरूप्यम् ॥ १५ ॥ महसे महिताय मौलिना विनतेनांजलि-
मंजनत्विषे । कलयामि विमुग्धबल्लवीवलयाभाषितमंजनत्विषे
॥१६॥ जयति ललितकृत्यं शिक्षको बल्लवीनां शिथिलवलयसिंजा-
शीतलैर्हस्ततालैः । अखिलभुवनरक्षागोपवेषस्य विष्णोरधरमणि-
सुधाया वंशवान्वंशनालः ॥ १७ ॥ चित्राकल्पः श्रवसि कलयँल्लांग-
लीकर्णपूरं बर्होत्तंसस्फुरितचिकुरो बंधुजीवं दधानः । गुंजाबद्धा-
मुरसि ललितां धारयन् हारयष्टिं गोपस्त्रीणां जयति कितवः कोऽपि
कौमारहारी ॥१८॥ लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्यामंसे
देव्याः पुलकनिबिडे सन्निविष्टान्यबाहुः । मेघश्यामो जयति ललितो
मेखलादत्तवेणुर्गुंजापीडस्फुरितचिकुरो गोपकन्याभुजंगः ॥ १९ ॥

प्रत्यालीढस्मृतिमधिगतां प्राप्तगाढांकपालीं पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः । भस्त्रायंत्रप्रणिहितकरो भक्तजीवातुरव्या-द्वारि क्रीडानिबिडवसनो बल्लवीवल्लभो नः ॥ २० ॥ वासो हृत्वा दिनकरसुतासंनिधौ बल्लवीनां लीलास्मेरो जयति ललिता-मास्थितः कुंदशाखाम् । सव्रीडाभिस्तदनु वसनं ताभिरभ्यर्थ्यमानः कामी कश्चित्करकमलयोरंजलिं याचमानः ॥ २१ ॥ इत्यनन्य-मनसा विनिर्मितां वेंकटेशकविना स्तुतिं पठन् । दिव्यवेणुरसिकः समीक्षते दैवतं किमपि यौवतप्रियम् ॥ २२ ॥ इति गोपाल-विंशतिस्तोत्रं संपूर्णम् ॥

## ३४२. श्रीकृष्णलहरीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कदा वृन्दारण्ये विपुलयमुनातीरपुलिने चरन्तं गोविन्दं हलधरसुदामादिसहितम् । अहो कृष्ण स्वामिन् मधुरमुर-लीमोहन विभो प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १ ॥ कदा कालिन्दीयैर्हरिचरणमुद्राङ्कितटैः स्मरन्गोपीनाथं कमलनयनं सस्मितमुखम् । अहो पूर्णानन्दाम्बुजवदन भक्तैकललन प्रसीदेति क्रोशन्० ॥ २ ॥ कदाचित्खेलन्तं व्रजपरिसरे गोपतनयैः कुतश्चित्संप्राप्तं किमपि लसितं गोपललनम् । अये राधे किं वा हरसि रसिके कञ्चकयुगं प्रसीदेति क्रोशन्० ॥ ३ ॥ कदाचिद्गोपीनां हसितचकितस्निग्धनयनं स्थितं गोपीवृन्दे नटमिव नटन्तं सुल-लितम् । सुराधीशैः सर्वैः स्तुतपदमिदं श्रीहरिमिति प्रसीदेति क्रोशन्० ॥ ४ ॥ कदाचित्सच्छायाश्रितमभिमहान्तं यदुपतिं समाधि-स्वच्छायां चल इव विलोलैकमकरम् । अये भक्तोदाराम्बुजवदन नन्दस्य तनय प्रसीदेति क्रोशन्० ॥ ५ ॥ कदाचित्कालिन्द्यास्तटतरु-कदम्बे स्थितममुं स्मयन्तं साकूतं हृतवसनगोपीसुतपदम् । अहो

शक्रानन्दाम्बुजवदन गोवर्धनधर प्रसीदेति क्रोशन्० ॥ ६ ॥ कदाचित्कान्तारे विजयसखमिष्टं नृपसुतं वदन्तं पार्थेति नृपसुतसखे बन्धुरिति च । भ्रमन्तं विश्रान्तं श्रितमुरलिमास्यं हरिममी प्रसीदेति क्रोशन्० ॥ ७ ॥ कदा द्रक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशमहो विष्णो योगिन् रसिकमुरलीमोहन विभो । दयां कर्तुं दीने परमकरुणाब्धे समुचितं प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ८ ॥ इति श्रीवासुदेवानन्दसरस्वतीविरचितं श्रीकृष्णलहरीस्तोत्रं संपूर्णम् ॥

## ३४३. कृष्णद्वादशनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीकृष्ण उवाच ॥ किं ते नामसहस्रेण विज्ञातेन तवार्जुन । तानि नामानि विज्ञाय नरः पापैः प्रमुच्यते ॥ १ ॥ प्रथमं तु हरिं विन्द्याद्द्वितीयं केशवं तथा । तृतीयं पद्मनाभं च चतुर्थं वामनं स्मरेत् ॥ २ ॥ पञ्चमं वेदगर्भं तु षष्ठं च मधुसूदनम् । सप्तमं वासुदेवं च वराहं चाष्टमं तथा ॥ ३ ॥ नवमं पुण्डरीकाक्षं दशमं हि जनार्दनम् । कृष्णमेकादशं विन्द्याद्द्वादशं श्रीधरं तथा ॥ ४ ॥ द्वादशैतानि नामानि विष्णुप्रोक्तान्यनेकशः । सायंप्रातः पठेन्नित्यं तस्य पुण्यफलं शृणु ॥ ५ ॥ चान्द्रायणसहस्राणि कन्यादानशतानि च । अश्वमेधसहस्राणि फलं प्राप्नोत्यसंशयः ॥ ६ ॥ अमायां पौर्णमास्यां च द्वादश्यां तु विशेषतः । प्रातःकाले पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७ ॥ इति श्रीमन्महाभारते अरण्यपर्वणि श्रीकृष्णद्वादशनामस्तोत्रं संपूर्णम् ॥

## ३४४. श्रीगोपालाष्टकम् ।

श्रीगणेशाय नमः ॥ यस्माद्विश्वं जातमिदं चित्रमतर्क्यं यस्मिन्नानंदात्मनि नित्यं रमते वै । यत्रांते संयाति लयं चैतदशेषं तं गोपालं संततकालं प्रति वंदे ॥ १ ॥ यस्याज्ञानाज्जन्मजरारोग-

कर्दंबं ज्ञाते यस्मिन्नश्यति तत्सर्वमिहाशु । गत्वा यत्रायाति पुनर्नो भवभूमिं तं गोपालं संततकालं प्रति वंदे ॥ २ ॥ तिष्ठन्नंतर्यो यमयत्येतदजस्रं यं कश्चिन्नो वेद जनोऽप्यात्मनि संतम् । सर्वं यस्येदं च वशे तिष्ठति विश्वं तं गोपालं संततकालं प्रति वंदे ॥ ३ ॥ धर्मोऽधर्मेणेह तिरस्कारमुपैति काले यस्मिन्मत्स्यमुखैश्चारुचरित्रैः । नानारूपैः पाति तदा योऽवनिबिंबं तं गोपालं संततकालं प्रति वंदे ॥ ४ ॥ प्राणायामैर्ध्वस्तसमस्तेंद्रियदोषा रुद्ध्वा चित्तं यं हृदि पश्यंति समाधौ । ज्योतीरूपं योगिजना मोदनिमग्नास्तं गोपालं संततकालं प्रति वंदे ॥ ५ ॥ भानुश्चंद्रश्चोडुगणश्चैव हुताशो यस्मिन्नैवाभाति तडिच्चापि कदापि । यद्भासा चाभाति समस्तं जगदेतत्तं गोपालं संततकालं प्रति वंदे ॥ ६ ॥ सत्यज्ञानं मोदमवोचुर्निगमा यं यो ब्रह्मेंद्राद्यादित्यगिरीशार्चितपादः । शेतेऽनंतोऽनंततनावंबुनिधौ यस्तं गोपालं संततकालं प्रति वंदे ॥ ७ ॥ शैवाः प्राहुर्यं शिवमन्ये गणनाथं शक्तिं चैकेऽर्कं च तथान्ये मतिभेदात् । नानाकारैर्भाति य एकोऽखिलशक्तिस्तं गोपालं संततकालं प्रति वंदे ॥ ८ ॥ श्रीमद्गोपालाष्टकमेतत् समधीते भक्त्या नित्यं यो मनुजो वै स्थिरचेताः । हित्वा तूर्णं पापकलापं स समेति पुण्यं विष्णोर्धाम यतो नैव निपातः ॥ ९ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीगोपालाष्टकं संपूर्णम् ॥

## ३४५. श्रीकृष्णाष्टकम् ।

श्रीगणेशाय नमः ॥ चतुर्मुखादिसंस्तुतं समस्तसात्वतानुतम् । हलायुधादिसंयुतं नमामि राधिकाधिपम् ॥ १ ॥ बकादिदैत्यकालकं सगोपगोपिपालकम् । मनोहरासितालकं नमामि राधिकाधिपम् ॥ २ ॥ सुरेंद्रगर्वभंजनं विरिंचिमोहभंजनम् । व्रजांगनानुरंजनं

नमामि राधिकाधिपम् ॥ ३ ॥ मयूरपिच्छमंडनं गजेन्द्रदंतखंडनम् । नृशंसकंसदंडनं नमामि राधिकाधिपम् ॥ ४ ॥ प्रदत्तविप्रदारकं सुदामधामकारकम् । सुरद्रुमापहारकं नमामि राधिकाधिपम् ॥५॥ धनंजयाजयावहं महाचमूक्षयावहम् । पितामहव्यथापहं नमामि राधिकाधिपम् ॥ ६ ॥ मुनींद्रशापकारणं यदुप्रजापहारिणम् । धराभरावतारणं नमामि राधिकाधिपम् ॥ ७ ॥ सुवृक्षमूलशायिनं मृगारिमोक्षदायिनम् । स्वकीयधाममायिनं नमामि राधिकाधिपम् ॥ ८ ॥ इदं समाहितो हितं वराष्टकं सदा मुदा । जपञ्जनो जनुर्जरादितो द्रुतं प्रमुच्यते ॥ ९ ॥ इति श्रीपरमहंसस्वामिब्रह्मानंदविरचितं श्रीकृष्णाष्टकं संपूर्णम् ॥

## ३४६. सत्यव्रतोक्तदामोदरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सिंधुदेशोद्भवो विप्रो नाम्ना सत्यव्रतः सुधीः । विरक्त इंद्रियार्थेभ्यस्त्यक्त्वा पुत्रगृहादिकम् ॥ १ ॥ वृंदावने स्थितः कृष्णमाराराध दिवानिशम् । निःस्वः सत्यव्रतो विप्रो निर्जनेऽव्यग्रमानसः ॥ २ ॥ कार्तिके पूजयामास प्रीत्या दामोदरं नृप । तृतीयेऽह्नि सकृद्भुंक्ते पत्रं मूलं फलं तथा ॥ ३ ॥ एवंभावसमायुक्तो भक्त्या तद्गतमानसः । पूजयित्वा हरिं स्तौति प्रीत्या दामोदराभिधम् ॥ ४ ॥ सत्यव्रत उवाच ॥ नमामीश्वरं सच्चिदानंदरूपं लसत्कुंडलं गोकुले भ्राजमानम् । यशोदाभियोलूखले धावमानं परामृष्टमत्यंततो दूनगोप्या ॥ ५ ॥ रुदंतं मुहुर्नेत्रयुग्मं मृजंतं कराम्भोजयुग्मेन सातंकनेत्रम् । मुहुः श्वासकं पत्रिरेखांककंठ स्थितं नौमि दामोदरं भक्तवंद्यम् ॥ ६ ॥ वरं देव देहीश मोक्षावधिं वा न चान्यं वृणेऽहं वरेशादपीह । इदं ते वपुर्नाथ गोपालबालं सदा मे मनस्याविरास्तां किमन्यैः ॥ ७ ॥ इदं ते मुखांभोज-

मत्यंतनीलैर्वृतं कुंतलैः स्निग्धवक्रैश्च गोप्या । मुहुश्चुंबितं बिंबरक्ताधरं मे मनस्याविरास्तामलं लक्षलाभैः ॥ ८ ॥ नमो देव दामोदरानंत विष्णो प्रसीद प्रभो दुःखजालाब्धिमग्नम् । कृपादृष्टिवृष्ट्याऽतिदीनं च रक्ष गृहाणेश मामज्ञमेवाक्षिदृश्यम् ॥ ९ ॥ कुबेरात्मजौ वृक्षमूर्तौ च यद्वत्त्वया मोचितौ भक्तिभाजौ कृतौ च । तथा प्रेमभक्तिं स्वकां मे प्रयच्छ न मोक्षे ग्रहो मेऽस्ति दामोदरेह ॥ १० ॥ नमस्ते सुदाम्ने स्फुरद्दीप्तधाम्ने तथोरःस्थविश्वस्य धाम्ने नमस्ते । नमो राधिकायै त्वदीयप्रियायै नमोऽनंतलीलाय देवाय तुभ्यम् ॥ ११ ॥ नारद उवाच ॥ सत्यव्रतद्विजस्तोत्रं श्रुत्वा दामोदरो हरिः । विद्युल्लीलाचमत्कारो हृदये शनकैरभूत् ॥ १२ ॥ इति श्रीसत्यव्रतकृतदामोदरस्तोत्रं संपूर्णम् ॥

## ३४७. श्रीकृष्णशरणाष्टकम् ।

श्रीगणेशाय नमः ॥ सर्वसाधनहीनस्य पराधीनस्य सर्वतः । पापपीनस्य दीनस्य श्रीकृष्णः शरणं मम ॥ १ ॥ संसारसुखसंप्राप्तिसन्मुखस्य विशेषतः । बहिर्मुखस्य सततं श्रीकृष्णः शरणं मम ॥ २ ॥ सदा विषयकामस्य देहारामस्य सर्वथा । दुष्टस्वभाववामस्य श्रीकृष्णः शरणं मम ॥ ३ ॥ संसारसर्पदष्टस्य धर्मभ्रष्टस्य दुर्मतेः । लौकिकप्राप्तिकष्टस्य श्रीकृष्णः शरणं मम ॥ ४ ॥ विस्मृतस्वीयधर्मस्य कर्ममोहितचेतसः । स्वरूपज्ञानशून्यस्य श्रीकृष्णः शरणं मम ॥ ५ ॥ संसारसिन्धुमग्नस्य भग्नभावस्य दुष्कृतेः । दुर्भावलग्नमनसः श्रीकृष्णः शरणं मम ॥ ६ ॥ विवेकधैर्यभक्त्यादिरहितस्य निरन्तरम् । विरुद्धकरणासक्तेः श्रीकृष्णः शरणं मम ॥ ७ ॥ एतदष्टकपाठेन ह्येतदुक्तार्थभावनात् । निजाचार्यपदांभोजसेवकोऽदैन्यमाप्नुयात् ॥ ८ ॥ इति श्रीकृष्णशरणाष्टकं संपूर्णम् ॥

*

# पांडुरंगस्तोत्राणि ।




समचरणसरोजं सांद्रनीलांबुदाभं
जघननिहितपाणिं मंडनं मंडनानाम् ।
तरुणतुलसिमालाकंधरं कंजनेत्रं
सदयधवलहासं विठ्ठलं चिंतयामि ॥

# अथ पांडुरंगस्तोत्राणि ।

## ३४८. विठ्ठलहृदयस्तोत्रम् ।

श्रीगणेशायः नमः ॥ श्रीपार्वत्युवाच ॥ महाशम्भो देवदेव भक्तानुग्रहकारक । श्रीविठ्ठलाख्यं हृदयं तन्मे ब्रूहि सदाशिव ॥ १ ॥ श्रीशंकर उवाच ॥ श्रृणु देवि महादेवि पार्वति प्राणवल्लभे । गुह्याद्गुह्यतरं श्रेष्ठं नास्ति गुह्यमतः परम् ॥ २ ॥ जीवस्य जीवनं साक्षात्प्राणिनां प्राण उच्यते । योगिनां हि महागम्यं पाण्डुरङ्गाभिधानकम् ॥ ३ ॥ अद्यापि महिमा तस्य सर्वथा ज्ञायते न हि । नित्यनूतनतक्षत्रस्योपमा नास्ति निश्चितम् ॥ ४ ॥ मुखं कञ्जेन तुलितं पद्मपत्रसमेक्षणम् । कथं साम्यं भवेद्देवि ह्यन्तरं महदन्तरम् ॥ ५ ॥ गजैरावतयोश्चैव अश्वोच्चैःश्रवसोस्तथा । स्पर्शपाषाणयोश्चैव ह्यन्तरं महदन्तरम् ॥ ६ ॥ काश्याः शतगुणं श्रेष्ठं द्वारवत्याद्विलक्षयोः । एवं सर्वाणि तीर्थानि कलां नार्हन्ति कानिचित् ॥ ७ ॥ तीर्थं क्षेत्रं दैवतं च मन्त्रः स्तोत्रं महाद्भुतम् । एतत्सर्वं यथाशक्त्या वर्णयामि मम प्रिये ॥ ८ ॥ एकदा क्षीरसंस्थाने देवदेवं जगद्गुरुम् । गतोऽहं पादपूजार्थं सुरेन्द्रब्राह्मणैः सह ॥ ९ ॥ शेषनारदपक्षीन्द्रैर्लक्ष्मीकान्तं गणैः सह । प्रणम्य परमात्मानं तमुवाच चतुर्मुखः ॥ १० ॥ ब्रह्मोवाच ॥ महाविष्णो जगन्नाथ सर्वविश्वगुहाशय । तव यच्च प्रियं देव संस्थानं ब्रूहि केशव ॥ ११ ॥ श्रीभगवानुवाच ॥ श्रृणु ब्रह्मन् महाशंभो अधिष्ठानं ममालयम् । पाण्डुरङ्गमिति ख्यातं न साम्यं भुवनत्रये ॥ १२ ॥ पाण्डुरङ्गं च वैकुण्ठं तुलयित्वा मयाऽधुना । पाण्डुरङ्गं गुरुं मत्वा पूर्णत्वेनास्थितोऽस्म्यहम् ॥ १३ ॥ नाहं तिष्ठामि क्षीराब्धौ नास्मि सूर्येंदु-

मण्डले। मन्नामकीर्तनस्थाने तत्र तिष्ठामि शंकर ॥ १४ ॥ कार्यकारणकर्तृत्वे संभवक्षेत्रमुच्यते। तादृशं नास्ति तत्क्षेत्रं यत्र तिष्ठामि सर्वदा ॥ १५ ॥ सुखे संजयति ब्रह्म ब्रह्मबीजं प्रशस्यते। बीजेन व्यज्यते बिन्दुर्बिन्दोर्नादः प्रकीर्तितः ॥ १६ ॥ आहतोऽनाहतश्चेति द्विधा नादस्तु विद्यते। ॐकारोऽनाहतो मूर्तिराहतो नामकीर्तनम् ॥ १७ ॥ बिन्दुनादात्मकं क्षेत्रं नादोऽव्यक्तः प्रदृश्यते। यत्र संकीर्तनेनैव साक्षाद्ब्रह्ममयो भवेत् ॥ १८ ॥ कीदृशं धृतवान् रूपमित्याह परमेश्वरः। इष्टिकायां समपदं तत्त्वमस्यादिलक्षणम् ॥ १९ ॥ कटिविन्यस्तहस्ताब्जं प्रणवाकृतिसौरसम्। ऊर्ध्वबीजसमाख्यातं पूर्णेन्दुमुखमण्डनम् ॥ २० ॥ सर्वभूषणशोभाढ्यमीदृशं मोक्षदं नृणाम्। अज्ञानजनबोधार्थं तिष्ठामीह जनार्दनः ॥ २१ ॥ विठ्ठलः परमो देवस्त्रयीरूपेण तिष्ठति। तीर्थं क्षेत्रं तथा देवो ब्रह्म ब्रह्मविदां वर ॥ २२ ॥ गुह्याद्गुह्यतरं देवं क्षेत्राणां क्षेत्रमुत्तमम्। चन्द्रभागावरं तीर्थं न भूतं न भविष्यति ॥ २३ ॥ इति श्रुत्वा रमेशस्य वचनं परमामृतम्। ब्रह्मा नारदसंयुक्तो हृदयं कीर्तयन् ययौ ॥ २४ ॥ इदं विठ्ठलहृदयं सर्वदारिघ्ननाशनम्। सकृत्पठनमात्रेण लभते परमं पदम् ॥ २५ ॥ ॐमस्य हृदयमन्त्रस्य परब्रह्म ऋषिः स्मृतः। छन्दोऽनुष्टुप् प्रविख्यातो देवः श्रीविठ्ठलो महः ॥ २६ ॥ ॐ नमो बीजमाख्यातं श्रीं पातु शक्तिरीडिता। ॐ श्रीं क्लीं कीलकं यस्य वेधको देवविठ्ठलः ॥ २७ ॥ त्रिबीजैरङ्गुलिन्यासः षडंगानि ततः परम्। ध्यानादिकं महादिव्यं हृदयं हृदये स्मरेत् ॥ २८ ॥ ॐ अस्य श्रीविठ्ठलहृदयस्तोत्रमंत्रस्य परब्रह्म ऋषिः। अनुष्टुप् छंदः। श्रीविठ्ठलः परमात्मा देवता। ॐ नम इति बीजम्। ॐ श्रीं शक्तिः। ॐ श्रीं क्लीं कीलकम्। ॐ श्रीं विठ्ठलो वेधकः।

श्रीविठ्ठलप्रीत्यर्थं जपे विनियोगः । ॐ श्रीं क्लीं अंगुल्यादिषडंग-
न्यासः ॥ अथ ध्यानम् ॥ ॐ श्रीं क्लीं प्रहसितमुखचंद्रं प्रोल्लसत्पूर्ण-
बिंबं प्रणमदभयहस्तं चारुनीलांबुदाभम् । समपदकमनीयं तत्त्व-
बोधावगम्यं सदयवरददेवं विठ्ठलं तं नमामि ॥ २९ ॥ क्लीं श्रीं
ॐ ॐ श्रीं क्लीम् ॥ पांडुरंगः शिखां पातु मूर्धानं पातु विठ्ठलः ।
मस्तकं माधवः पातु तिलकं पातु श्रीकरः ॥ ३० ॥ भर्गः पातु
भ्रुवोर्मध्ये लोचने विष्णुरोजसा । दृष्टिं सुदर्शनः पातु श्रोत्रे पातु
दिगंबरः ॥ ३१ ॥ नासाग्रं सृष्टिसौंदर्यं ओष्ठौ पातु सुधार्णवः ।
दन्तान् दयानिधिः पातु जिह्वां मे वेदवल्लभः ॥ ३२ ॥ तालुदेशं
हरिः पातु रसनां गोरसप्रियः । चिबुकं चिन्मयः पातु ग्रीवां मे
गरुडध्वजः ॥ ३३ ॥ कंठं तु कंबुकंठश्च स्कंधौ पातु महाबलः ।
भुजौ गिरिधरः पातु बाहू मे मधुसूदनः ॥ ३४ ॥ कूर्परौ कृपया-
विष्टः करौ मे कमलापतिः । अंगुलीरच्युतः पातु नखानि नर-
केसरी ॥ ३५ ॥ वक्षः श्रीलांछनः पातु स्तनौ मे स्तनलालसः ।
हृदयं श्रीहृषीकेश उदरं परमामृतः ॥ ३६ ॥ नाभिं मे पद्मनाभश्च
कुक्षिं ब्रह्मांडनायकः । कटिं पातु कटिकरो जघनं तु जनार्दनः
॥ ३७ ॥ शिश्नं पातु स्मराधीशो वृषणे वृषभः पतिः । गुह्यं गुह्यतरः
पातु ऊरू पातूरुविक्रमः ॥ ३८ ॥ जानू पातु जगन्नाथो जंघे मे
मनमोहनः । गुल्फौ पातु गणाधीशः पादौ पातु त्रिविक्रमः ॥ ३९ ॥
शरीरं चाखिलं पातु नरनारायणो हरिः । अग्रे ह्यग्रतरः पातु
दक्षिणे दक्षकप्रियः ॥ ४० ॥ पृष्ठे पुष्टिकरः पातु वामे मे वासव-
प्रभुः । पूर्वे पूर्वापरः पातु आग्नेय्यां चाग्निरक्षकः ॥ ४१ ॥ दक्षिणे
दीक्षितार्थश्च नैर्ऋत्यामृतुनायकः । पश्चिमे वरुणाधीशो वायव्ये
वातजापतिः ॥ ४२ ॥ उत्तरे धृतखड्गश्च ईशान्ये पातु ईश्वरः ।

उपरिष्टात्तु भगवानंतरिक्षे चिदंबरः ॥ ४३ ॥ भूतले धरणीनाथः पाताले कूर्मनायकः । स्वर्गे पातु सुरेंद्रेन्द्रो ब्रह्मांडे ब्रह्मणस्पतिः ॥ ४४ ॥ अटव्यां नृहरिः पातु जीवने विश्वजीवनः । मार्गे पातु मनोगम्यः स्थाने पातु स्थिरासनः ॥ ४५ ॥ सबाह्याभ्यन्तरं पातु पुंडरीकवरप्रियः । विष्णुर्मे विषयान् पातु वासनाः पातु वामनः ॥ ४६ ॥ कर्ता कर्मेन्द्रियं पातु ज्ञाता ज्ञानेन्द्रियं सदा । प्राणान् पातु प्राणनाथ आत्मारामो मनादिषु ॥ ४७ ॥ जाग्रतिं मे जगद्ब्रह्म स्वप्नं पातु सुतेजकः । सुषुप्तिं मे समाधीशस्तुर्यां पातु मुनिप्रियः ॥ ४८ ॥ भार्यां पातु रमाकांतः पुत्रान् पातु प्रजानिधिः । कन्या मे करुणानाथो बान्धवान् भक्तवत्सलः ॥ ४९ ॥ धनं पातु धनाध्यक्षो धान्यं विश्वकुटुम्बकः । पशून्मे पालकः पातु विद्यां पातु कलानिधिः ॥ ५० ॥ वाचस्पतिः पातु वादे सभायां विश्वमोहनः । कामक्रोधोद्भवात्पातु पूर्णकामो मनोरमः ॥ ५१ ॥ वस्त्रं रत्नं भूषणं च नाम रूपं कुलं गृहम् । सर्वं सर्वात्मकः पातु शुद्धब्रह्मपरात्परः ॥ ५२ ॥ क्लीं श्रीं ॐ ॐ श्रीं क्लीम् । विठ्ठलं मूर्ध्नि विन्यस्य ललाटे श्रीकरं न्यसेत् । पाण्डुरङ्गं भ्रुवोर्मध्ये नेत्रयोर्व्यापकं न्यसेत् ॥ ५३ ॥ कर्णयोर्निगमार्थं च गल्लयोर्वल्लभं न्यसेत् । नासिकायां न्यसेत्कृष्णं मुखे वै माधवं न्यसेत् ॥ ५४ ॥ ओष्ठयोर्मुरलीकान्तं दन्तपङ्क्त्यां सुहासकम् । रसनायां रसाधीशं जिह्वाग्रे कीर्तनं न्यसेत् ॥ ५५ ॥ कण्ठे न्यसेन्महाविष्णुं स्कन्धयोः कमलापतिम् । बाह्वोर्बलानुजं न्यस्य करे चक्रधरं न्यसेत् ॥ ५६ ॥ पाणितले पद्मधरं कराग्रे वरदाभयम् । वक्षःस्थले वरेण्यं च हृदये श्रीहरिं न्यसेत् ॥ ५७ ॥ उदरे विश्वभर्तारं नाभौ नाभिकरं न्यसेत् । कट्यां न्यसेत्क्रियातीतमूरौ तु उद्धवप्रियम् ॥ ५८ ॥ जानुद्वये

न्यसेच्छक्तिं पादयोः पावनं न्यसेत् । सबाह्याभ्यन्तरं न्यस्य देवदेवं जगद्गुरुम् ॥५९॥ क्लीं श्रीम् ॐ ॐ श्रीं क्लीम् । विठ्ठलाय नमस्तुभ्यं नमो विज्ञानहेतवे । विष्णुजिष्णुस्वरूपाय श्रीविष्णवे नमो नमः ॥ ६० ॥ नमः पुण्डरीकाक्षाय पूर्णबिम्बात्मने नमः । नमस्ते पाण्डुरङ्गाय पावनाय नमो नमः ॥ ६१ ॥ नमः पूर्णप्रकाशाय नमस्ते पूर्णतेजसे । पूर्णैश्वर्यस्वरूपाय पूर्णज्ञानात्मने नमः ॥ ६२ ॥ सच्चिदानन्दकन्दाय नमोऽनन्तसुखात्मने । नमोऽनन्ताय शान्ताय श्रीरामाय नमो नमः ॥ ६३ ॥ नमो ज्योतिःस्वरूपाय नमो ज्योतिर्मयात्मने । नमो ज्योतिःप्रकाशाय सर्वोत्कृष्टात्मने नमः ॥ ६४ ॥ ॐ नमो ब्रह्मरूपाय नम ॐकारमूर्तये । निर्विकल्पाय सत्याय शुद्धसत्त्वात्मने नमः ॥ ६५ ॥ महद्ब्रह्म नमस्तेऽस्तु सत्यसंकल्पहेतवे । नमः सृष्टिप्रकाशाय गुणसाम्याय ते नमः ॥ ६६ ॥ ब्रह्मविष्णुमहेशाय नानावर्णात्मरूपिणे । सदोदिताय शुद्धाय गुणातीताय ते नमः ॥ ६७ ॥ नमः सहस्रनाम्ने च नमः सहस्ररूपिणे । नमः सहस्रवक्त्राय सहस्राक्षाय ते नमः ॥ ६८ ॥ केशवाय नमस्तुभ्यं नमो नारायणाय च । माधवाय नमस्तेऽस्तु गोविन्दाय नमो नमः ॥ ६९ ॥ श्रीविष्णवे नमस्तुभ्यं मधुसूदनरूपिणे । त्रिविक्रमसुदीर्घाय वामनाय नमो नमः ॥ ७० ॥ श्रीधराय नमस्तुभ्यं हृषीकेशाय ते नमः । नमस्ते पद्मनाभाय दामोदराय ते नमः ॥ ७१ ॥ नमस्ते संकर्षणाय वासुदेवाय ते नमः । प्रद्युम्नाय नमस्तेऽस्तु अनिरुद्धाय ते नमः ॥ ७२ ॥ नमः पुरुषोत्तमायाधोक्षजाय ते नमो नमः । नमस्ते नारसिंहाय अच्युताय नमो नमः ॥ ७३ ॥ नमो जनार्दनायास्तूपेन्द्राय च नमो नमः । श्रीहरये नमस्तुभ्यं श्रीकृष्णाय नमो नमः ॥ ७४ ॥ नमः पंढरिनाथाय

भीमातीरनिवासिने । नमो ऋषिप्रसन्नाय वरदाय नमो नमः ॥ ७५ ॥ इष्टिकारूढरूपाय समपादाय ते नमः । कटिविन्यस्तहस्ताय मुखब्रह्मात्मने नमः ॥ ७६ ॥ नमस्तीर्थस्वरूपाय क्षेत्ररूपात्मने नमः । नमोऽस्तु मूर्तिमूर्ताय त्रिमूर्तये नमो नमः ॥ ७७ ॥ नमस्ते बिन्दुतीर्थाय नमोऽमृतेश्वराय च । नमः पुष्करतीर्थाय चंद्रभागाय ते नमः ॥ ७८ ॥ नमस्ते जानुदेवाय धीरावत्यै नमो नमः । नमस्ते पुंडरीकाय भीमरथ्यै नमो नमः ॥ ७९ ॥ मुक्तिकेशप्रवराय वेणुवादात्मने नमः । नमस्तेऽनंतपादाय द्विपदाय नमो नमः ॥ ८० ॥ नमो गोवत्सपादाय गोपालाय नमो नमः । नमस्ते पद्मतीर्थाय नरनारायणात्मने ॥ ८१ ॥ नमस्ते पितृतीर्थाय लक्ष्मीतीर्थाय ते नमः । नमोऽस्तु शंखचक्राय गदापद्माय ते नमः ॥ ८२ ॥ नमोऽश्वत्थनृसिंहाय कुंडलाख्यस्वरूपिणे । नमस्ते क्षेत्रपालाय महालिंगाय ते नमः ॥ ८३ ॥ नमस्ते रंगशालाय नमः कीर्तनरूपिणे । नमो रुक्मिणिनाथाय महामूर्त्यै नमो नमः ॥ ८४ ॥ नमो वैकुंठनाथाय नमः क्षीराब्धिशायिने । सर्वब्रह्म नमस्तुभ्यमहंब्रह्मात्मने नमः ॥ ८५ ॥ नमो नमो नमस्तुभ्यं नमस्तेऽस्तु नमो नमः । क्लीं श्रीं ॐ । आद्यन्ते संपुटीकृत्य बीजैश्च प्राणवल्लभे ॥ ८६ ॥ अष्टोत्तरशतं मंत्रान् हृदयं नमनैः सह । अनन्यैः कीर्तितं यैश्च तेषामाज्ञां वहाम्यहम् ॥ ८७ ॥ यावान्यस्य यथा भावो यन्नामन्यासपूर्वकम् । तावदेव हि विज्ञानं गदितं मदनुग्रहात् ॥ ८८ ॥ श्रीशंकर उवाच ॥ इत्युक्तं वासुदेवोक्तं गोप्याद्गोप्यतरं महत् । नित्यं संकीर्तनं यस्य प्राप्तमुक्तिर्न संशयः ॥ ८९ ॥ इदं गुह्यं हि हृदयं विठ्ठलस्य महाद्भुतम् । शृणुयाच्छ्रद्धया युक्तो वैकुंठे लभते रतिम् ॥ ९० ॥ एवमुक्त्वा महादेवः पार्वतीमनुकंपया । समा-

धिस्थोऽभवच्छंभुः सुस्मितः कमलाननः ॥ ९१ ॥ इति श्रीभविष्योत्तरपुराणे पांडुरंगमाहात्म्ये श्रीविठ्ठलहृदयस्तोत्रं संपूर्णम् ॥

## ३४९. विठ्ठलकवचम् ।

श्रीगणेशाय नमः ॥ सूत उवाच ॥ शिरो मे विठ्ठलः पातु कपोलं मुद्गरप्रियः । नेत्रयोर्विष्णुरूपी च वैकुण्ठो घ्राणमेव च ॥ १ ॥ मुनिसेव्यो मुखं पातु दन्तपङ्क्तिं सुरेश्वरः । विद्याधीशस्तु मे जिह्वां कण्ठं विश्वेशवन्दितः ॥ २ ॥ व्यापको हृदयं पातु स्कन्धौ पातु सुखप्रदः । भुजौ मे नृहरिः पातु करौ च सुरनायकः ॥ ३ ॥ मध्यं पातु सुराधीशो नाभिं पातु सुरालयः । सुरवन्द्यः कटी पातु जानुनी कमलासनः ॥ ४ ॥ जङ्घे पातु हृषीकेशः पादौ पातु त्रिविक्रमः । निखिलं च शरीरं मे पातां गोविन्दमाधवौ ॥ ५ ॥ अकारो व्यापको विष्णुरक्षरात्मक एव च । पावकः सर्वपापानामकाराय नमो नमः ॥ ६ ॥ तारकः सर्वभूतानां धर्मशास्त्रेषु गीयते । पुनातु विश्वभुवनं तोंकाराय नमो नमः ॥ ७ ॥ मूलप्रकृतिरूपा या महामाया च वैष्णवी । तस्या बीजेन संयुक्तयकाराय नमो नमः ॥ ८ ॥ वैकुण्ठाधिपतिः साक्षाद्वैकुण्ठपददायकः । वैजयन्तीसमायुक्तो विकाराय नमो नमः ॥ ९ ॥ स्नातः सर्वेषु तीर्थेषु पूतो यज्ञादिकर्मसु । पावनो द्विजपङ्क्तीनां ठकाराय नमो नमः ॥ १० ॥ वाहनं गरुडो यस्य भुजङ्गः शयनं तथा । वामभागे च लक्ष्मीश्च लकाराय नमो नमः ॥ ११ ॥ नारदादिसमायुक्तं वैष्णवं परमं पदम् । लभते मानवो नित्यं वैष्णवं धर्ममाश्रितः ॥ १२ ॥ व्याधयो विलयं यान्ति पूर्वकर्मसमुद्भवाः । भूतानि च पलायन्ते मन्त्रोपासकदर्शनात् ॥ १३ ॥ इदं षडक्षरस्तोत्रं यो जपेच्छ्रद्धयान्वितः । विष्णोः सायुज्यमाप्नोति सत्यं सत्यं न संशयः ॥१४॥ इति श्रीपद्मपुराणे सूतशौनकसंवादे श्रीविठ्ठलकवचं संपूर्णम् ॥

## ३५०. श्रीविठ्ठलाष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रुत्वा नामसहस्रं श्रीविठ्ठलस्य गुणान्वितम् । पार्वती परिपप्रच्छ शंकरं लोकशंकरम् ॥ १ ॥ श्रीपार्वत्युवाच ॥ देवदेव महादेव देवानुग्रहविग्रह । अष्टोत्तरशतं नाम्नां तस्य देवस्य मे वद ॥ २ ॥ जनः कलिमलादिग्धोऽलसः कामाविलो जडः । पाठाद्यस्य सकृद्वापि सौशील्यादियुतो भवेत् ॥ ३ ॥ तदहं श्रोतुमिच्छामि तवाज्ञानं न विद्यते ॥ सूत उवाच ॥ इत्युक्तो भार्यया शंभुः संस्मरन् पुरुषोत्तमम् ॥ ४ ॥ कटिस्थितकरद्वन्द्वं जगाद नगपुत्रिकाम् ॥ श्रीशंकर उवाच ॥ देवि लोकोपकाराय कृतः प्रश्नस्त्वयानघे ॥ ५ ॥ हिताय सर्वजन्तूनां नाम्नामष्टोत्तरं शतम् । श्रीविठ्ठलस्य देवस्य वाग्मिसिद्धिप्रदं नृणाम् ॥ ६ ॥ अष्टोत्तरशतस्याहमृषिः प्रोक्तो मनीषिभिः । छन्दोऽनुष्टुब् देवता श्रीविठ्ठलः परिकीर्तितः ॥ ७ ॥ ध्यानम् ॥ ध्यायेच्छ्रीविठ्ठलाख्यं समपदकमलं पद्मपत्रायताक्षं गम्भीरस्निग्धहासं कटिनिहितकरं नीलमेघावभासम् । विद्युद्वासो वसानं मणिमयमुकुटं कुण्डलोद्भासिगण्डं मायूरस्रग्विभूषाभयवरसहितं कौस्तुभोद्भासिताङ्गम् ॥ ८ ॥ ॐ क्लीम् । विठ्ठलः पुण्डरीकाक्षः पुण्डरीकनिभेक्षणः । पुण्डरीकाश्रमपदः पुण्डरीकजलाप्लुतः ॥ ९ ॥ पुण्डरीकक्षेत्रवासः पुण्डरीकवरप्रदः । शारदाधिष्ठितद्वारः शारदेन्दुनिभाननः ॥ १० ॥ नारदाधिष्ठितद्वारो नारदेशप्रपूजितः । भुवनाधीश्वरीद्वारो भुवनाधीश्वरीश्वरः ॥ ११ ॥ दुर्गाश्रितोत्तरद्वारो दुर्गमागमसंवृतः । क्षुल्लपेशीपिनद्धोरुगोपेष्ट्याश्लिष्टजानुकः ॥ १२ ॥ कटिस्थितकरद्वन्द्वो वरदाभयमुद्रितः । त्रेतातोरणपालस्थत्रिविक्रम इतीरितः ॥ १३ ॥ तितऊक्षेत्रपोऽश्वत्थकोटीश्वरवरप्रदः । स एव करवीरस्थो नारीनाराय-

णीति च ॥ १४ ॥ नीरासंगमसंस्थश्च सैकतः प्रतिमार्चितः । वेणुनादेन देवानां मनःश्रवणमङ्गलः ॥ १५ ॥ देवकन्याकोटिकोटिनीराजितपदाम्बुजः । पद्मतीर्थस्थिताश्वत्थो नरो नारायणो महान् ॥ १६ ॥ चन्द्रभागासरोनीरकेलिलोलदिगम्बरः । ससध्रीचीत्सवीषूचीरितिश्रुत्यर्थरूपधृक् ॥ १७ ॥ ज्योतिर्मयक्षेत्रवासी सर्वोत्कृष्टत्रयात्मकः । स्वकुण्डलप्रतिष्ठाता पञ्चायुधजलप्रियः ॥ १८ ॥ क्षेत्रपालाग्रपूजार्थी पार्वतीपतिपूजितः । चतुर्मुखस्तुतो विष्णुर्जगन्मोहनरूपधृक् ॥ १९ ॥ मन्त्राक्षरावलीहृत्स्थकौस्तुभोरःस्थलप्रियः स्वमन्त्रोज्जीवितजनः सर्वकीर्तनवल्लभः ॥ २० ॥ वासुदेवो दयासिन्धुर्गोगोपीपरिवारितः । युधिष्ठिरहतारातिर्मुक्तकेशी वरप्रदः ॥ २१ ॥ बलदेवोपदेष्टा च रुक्मिणीपुत्रनायकः । गुरुपुत्रप्रदो नित्यमहिमा भक्तवत्सलः ॥ २२ ॥ भक्तारिहा महादेवो भक्ताभिलषितप्रदः । सव्यसाची ब्रह्मविद्यागुरुर्मोहापकारकः ॥ २३ ॥ भीमामार्गप्रदाता च भीमसेनमतानुगः । गन्धर्वानुग्रहकरो ह्यपराधसहो हरिः ॥ २४ ॥ स्वप्नदर्शी स्वप्नदृश्यो भक्तदुःस्वप्नशान्तिकृत् । आपत्कालानुपेक्षी चानपेक्षोऽपेक्षितो जनैः ॥ २५ ॥ सत्योपयाचनः सत्यसंधः सत्याभितारकः । सत्याजानी रमाजानी राधाजानी रथाङ्गभाक् ॥ २६ ॥ सिञ्चनः क्रीडनो गोपैर्दधिदुग्धापहारकः । बोधिन्युत्सवयुक् तीर्थः शयन्युत्सवभूमिभाक् ॥ २७ ॥ मार्गशीर्षोत्सवाक्रान्तवेणुनादपदाङ्कभूः । दध्यन्नव्यञ्जनाभोक्ता दधिभुक्कामपूरकः ॥ २८ ॥ बिलान्तर्धानसत्केलिलोलुपो गोपवल्लभः । सखिनेत्रे पिधायाशु कोऽहंपृच्छाविशारदः ॥ २९ ॥ समासमप्रश्नपूर्वमुष्टिमुष्टिप्रदर्शिकः । कुटिलीलासु कुशलः कुटिलालकमण्डितः ॥ ३० ॥ सारीलीलानुसारी च वाहक्रीडापरः सदा । कार्णा-

टक्षीरतिरतो मङ्गलोपवनस्थितः ॥ ३१ ॥ माध्याह्नतीर्थपूरेक्षाविस्मायितजगत्त्रयः । निवारितक्षेत्रविघ्नो दुष्टदुर्बुद्धिभञ्जनः ॥ ३२ ॥ वालुकावृक्षपाषाणपशुपक्षिप्रतिष्ठितः । आशुतोषो भक्तवशः पांडुरङ्गः सुपावनः ॥ ३३ ॥ पुण्यकीर्तिः परं ब्रह्म ब्रह्मण्यः कृष्ण एव च । अष्टोत्तरशतं नाम्नां विठ्ठलस्य महात्मनः ॥ ३४ ॥ इति ते कथितं देवि पवित्रं मङ्गलं महत् । त्रिकालमेककालं वा यः पठेन्नियतः शुचिः ॥ ३५ ॥ करस्थाः सिद्धयस्तस्य सत्यं सत्यं वदाम्यहम् । अपुत्रो बहुपुत्रः स्यादविद्यः सर्वविद्यते ॥ ३६ ॥ निर्धनो धनदो नूनं भवेदस्य निषेवणात् । अविनाभूतभार्यश्च जितारातिर्निरामयः ॥ ३७ ॥ बहुनोक्तेन किं देवि हरिवल्लभतामियात् ॥ सूत उवाच ॥ श्रुत्वा तन्महदाश्चर्यमष्टोत्तरशतं परम् ॥ ३८ ॥ पुनःपुनः प्रणम्येशं पार्वती वाक्यमब्रवीत् ॥ पार्वत्युवाच ॥ तत्क्षेत्रवसतिश्चैव तत्तीर्थस्यावगाहनम् ॥ ३९ ॥ तन्मूर्तिदर्शनं चैव तन्नामावलिकीर्तनम् । देहि मे सर्वदा स्वामिन्नेकाग्रमनसा विभो ॥ ४० ॥ श्रीशंकर उवाच ॥ तदस्तु तव देवेशि ममाप्येतन्मनीषितम् । इत्युक्त्वा प्रययौ तस्य निवासं परमादरात् ॥ ४१ ॥ इति श्रीपद्मपुराणे पञ्चोनषष्टिसाहस्र्यां संहितायां हररहस्ये उमामहेश्वरसंवादे विठ्ठलनामाष्टोत्तरशतं संपूर्णम् ॥

## ३५१. पांडुरंगाष्टकम् ।

श्रीगणेशाय नमः ॥ महायोगपीठे तटे भीमरथ्यां वरं पुंडरीकाय दातुं मुनींद्रैः । समागत्य तिष्ठंतमानंदकंदं परब्रह्मलिंगं भजे पांडुरंगम् ॥ १ ॥ तडिद्वाससं नीलमेघावभासं रमामंदिरं सुंदरं चित्प्रकाशम् । वरं त्विष्टिकायां समन्यस्तपादं परब्रह्मलिंगं भजे पांडुरंगम् ॥ २ ॥ प्रमाणं भवाब्धेरिदं मामकानां नितंबः कराभ्यां धृतो

येन तस्मात् । विधातुर्वसत्यै धृतो नाभिकोशः परब्रह्मलिंगं भजे पांडुरंगम् ॥ ३ ॥ स्फुरत्कौस्तुभालंकृतं कंठदेशे श्रिया जुष्टकेयूरकं श्रीनिवासम् । शिवं शांतमीड्यं वरं लोकपालं परब्रह्मरूपं भजे पांडुरंगम् ॥ ४ ॥ शरच्चंद्रबिंबाननं चारुहासं लसत्कुंडलाक्रांतगंडस्थलांगम् । जपारागबिंबाधरं कंजनेत्रं परब्रह्मलिंगं भजे पांडुरंगम् ॥ ५ ॥ किरीटोज्ज्वलत्सर्वदिक्प्रांतभागं सुरैरर्चितं दिव्यरत्नैरनर्घ्यैः । त्रिभंगाकृतिं बर्हमाल्यावतंसं परब्रह्मलिंगं भजे पांडुरंगम् ॥ ६ ॥ विभुं वेणुनादं चरंतं दुरंतं स्वयं लीलया गोपवेषं दधानम् । गवां वृंदकानंददं चारुहासं परब्रह्मलिंगं भजे पांडुरंगम् ॥ ७ ॥ अजं रुक्मिणीप्राणसंजीवनं तं परं धाम कैवल्यमेकं तुरीयम् । प्रसन्नं प्रसन्नार्तिहं देवदेवं परब्रह्मलिंगं भजे पांडुरंगम् ॥८॥ स्तवं पांडुरंगस्य वै पुण्यदं ये पठंत्येकचित्तेन भक्त्या च नित्यम् । भवांभोनिधिं तेऽपि तीर्त्वाऽन्तकाले हरेरालयं शाश्वतं प्राप्नुवंति ॥ ९ ॥ इति श्रीमच्छंकराचार्यविरचितं पांडुरंगाष्टकं संपूर्णम् ॥

## ३५२. श्रीहयग्रीवाष्टोत्तरशतनामस्तोत्रम् ॥

श्रीगणेशाय नमः ॥ शृण्वन्तु ऋषयः सर्वे हयास्याष्टोत्तरं शतम् ॥ हयग्रीवो महाविष्णुः केशवो मधुसूदनः । गोविंदः पुंडरीकाक्षो विष्णुर्विश्वंभरो हरिः ॥ १ ॥ आदित्यः सर्ववागीशः सर्वाधारः सनातनः । निराधारो निराकारो निरीशो निरुपद्रवः ॥ २ ॥ निरंजनो निष्कलंको नित्यतृप्तो निरामयः । चिदानंदमयः साक्षी शरण्यः सर्वदायकः ॥ ३ ॥ श्रीमाँल्लोकत्रयाधीशः शिवः सारस्वतप्रदः । वेदोद्धर्ता वेदनिधिर्वेदवेद्यः प्रभूतनः ॥ ४ ॥ पूर्णः पूरयिता पुण्यः पुण्यकीर्तिः परात्परः । परमात्मा परंज्योतिः परेशः पारगः परः ॥ ५ ॥

सर्ववेदात्मको विद्वान् वेदवेदांतपारगः । सकलोपनिषद्वेद्यो निष्कलः सर्वशास्त्रकृत् ॥ ६ ॥ अक्षमालाज्ञानमुद्रायुक्तहस्तो वरप्रदः । पुराणः पुरुषश्रेष्ठः शरण्यः परमेश्वरः ॥ ७ ॥ शांतो दांतो जितक्रोधो जितामित्रो जगन्मयः । जन्ममृत्युहरो जीवो जयदो जाड्यनाशनः ॥ ८ ॥ जपप्रियो जपस्तुत्यो जापकप्रियकृत्प्रभुः । विमलो विश्वरूपश्च विश्वगोप्ता विधिस्तुतः ॥ ९ ॥ विधींद्रशिवसंस्तुत्यः शांतिदः क्षांतिपारगः । श्रेयःप्रदः श्रुतिमयः श्रेयसां पतिरीश्वरः ॥ १० ॥ अच्युतोऽनंतरूपश्च प्राणदः पृथिवीपतिः । अव्यक्तो व्यक्तरूपश्च सर्वसाक्षी तमोहरः ॥ ११ ॥ अज्ञाननाशको ज्ञानी पूर्णचंद्रसमप्रभः । ज्ञानदो वाक्पतिर्योगी योगीशः सर्वकामदः ॥ १२ ॥ महायोगी महामौनी मौनीशः श्रेयसां पतिः । हंसः परमहंसश्च विश्वगोप्ता विराट् स्वराट् ॥ १३ ॥ शुद्धस्फटिकसंकाशो जटामंडलसंयुतः । आदिमध्यांतरहितः सर्ववागीश्वरेश्वरः ॥ १४ ॥ नाम्नामष्टोत्तरशतं हयग्रीवस्य यः पठेत् । वेदवेदांगवेदांतशास्त्राणां पारगः कविः ॥ १५ ॥ वाचस्पतिसमो बुद्ध्या सर्वविद्याविशारदः । महदैश्वर्यमासाद्य कलत्राणि च पुत्रकान् ॥ १६ ॥ अवाप्य सकलान् भोगानंते हरिपदं व्रजेत् ॥ इति पराशरपुराणे अगस्त्यनारदसंवादे हयग्रीवाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

ॐ

# कल्किस्तोत्राणि ।

## ३५३. कल्किस्तवः ।

श्रीगणेशाय नमः ॥ राजान ऊचुः ॥ गद्यानि ॥ जय जय निजमायया कल्पिताशेषविशेषकल्पनापरिणामजलाप्लुतलोकत्रयोपकारमाकलय्य मनुमनिशम्य पूरितमविजनाविजनाविर्भूतमहामीनशरीरं त्वं निजकृतधर्मसेतुसंरक्षणकृतावतारः ॥ १ ॥ पुनरिह जलधिमथनादृतदेवदानवगणानां मंदराचलानयनव्याकुलितानां साहाय्येनादृतचित्तः पर्वतोद्धरणामृतप्राशनरचनावतारः कूर्माकारः प्रसीद परेश त्वं दीननृपाणाम् ॥ २ ॥ पुनरिह दितिजबलपरिलंघितवासवसूदनादृत जितभुवनपराक्रमहिरण्याक्षनिधनपृथिव्युद्धरणसंकल्पाभिनिवेशेन धृतकोलावतार पाहि नः ॥ ३ ॥ पुनरिह त्रिभुवनजयिनो महाबलपराक्रमस्य हिरण्यकशिपोरर्दितानां देववराणां भयभीतानां कल्याणाय दितिसुतवधप्रेप्सुर्ब्रह्मणो वरदानादवध्यस्य न शस्त्रास्त्ररात्रिदिवास्वर्गमर्त्यपातालतले देवगंधर्वकिन्नरनरनागैरिति विचिंत्य नरहरिरूपेण नखाग्रभिन्नोरुं दष्टदंतच्छदं त्यक्तासुं कृतवानसि ॥ ४ ॥ पुनरिह त्रिजगज्जयिनो बलेः सत्रे शक्रानुजो बटुवामनो दैत्यसंमोहनाय त्रिपदभूमियाञ्चाच्छलेन विश्वकायस्तदुत्सृष्टजलसंस्पर्शविवृद्धमनोभिलाषस्त्वं भूतले बलेर्दौवारिकत्वमंगीकृतमुचितं दानफलम् ॥ ५ ॥ पुनरिह हैहयादिनृपाणाममितबलपराक्रमाणां नानामदोल्लंघितमर्यादावर्त्मनां निधनाय भृगुवंशजो जामदग्न्यः पितृहोमधेनुहरणप्रवृद्धमन्युवशात् त्रिःसप्तकृत्वो निःक्षत्रियां पृथिवीं कृतवानसि परशुरामावतारः ॥ ६ ॥ पुनरिह पुलस्त्यवंशावतंसस्य विश्रवसः पुत्रस्य निशाचरस्य रावणस्य

लोकत्रयतापनस्य निधनमुररीकृत्य रविकुलजातदशरथात्मजो विश्वामित्रादस्त्राण्युपलभ्य वने सीताहरणवशात्प्रवृद्धमन्युनाऽम्बुधिं वानरैर्निर्बध्य सगणं दशकंधरं हतवानसि रामावतारः ॥ ७ ॥ पुनरिह यदुकुलजलधिकलानिधिः सकलसुरगणसेवितपादारविंदद्वंद्वो विविधदानवदैत्यदलनलोकत्रयदुरिततापनो वसुदेवात्मजो रामावतारो बलभद्रस्त्वमसि ॥ ८ ॥ पुनरिह विधिकृतवेदधर्मानुष्ठानविहितनानादर्शनः सघृणः संसारकर्मत्यागविधिना ब्रह्माभासविलासचातुरीं प्रकृतिविमाननामसंपादयन् बुद्धावतारस्त्वमसि ॥ ९ ॥ अधुना कलिकुलनाशावतारो बौद्धपाखंडम्लेच्छादीनां च वेदधर्मसेतुपरिपालनाय कृतावतारः कल्किरूपेणास्मान् स्त्रीत्वनिरयादुद्धृतवानसि तवानुकंपां किमिह कथयामः ॥ १० ॥ क्व ते ब्रह्मादीनामविजितविलासावतरं क्व नः कामावामाकुलितमृगतृष्णार्तमनसाम् । सुदुष्प्राप्यं युष्मच्चरणजलजालोकनमिदं कृपापारावारः प्रमुदितदृशाश्वासय निजान् ॥ ११ ॥ इति श्रीकल्किपुराणेऽनुभागवते भविष्ये द्वितीयांशे नृपकृतः कल्किस्तवः संपूर्णः ॥

## ३५४. कल्किस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सुशांतोवाच ॥ जय हरेऽमराधीशसेवितं तव पदांबुजं भूरिभूषणम् । कुरु ममाग्रतः साधु सत्कृतं त्यज महामते मोहमात्मनः ॥ १ ॥ तव वपुर्जगद्रूपसंपदा विरचितं सतां मानसे स्थितम् । रतिपतेर्मनोमोहदायकं कुरु विचेष्टितं कामलंपटम् ॥ २ ॥ तव यशो जगच्छोकनाशनं मृदुकथामृतं प्रीतिदायकम् । स्मितसुधोक्षितं चंद्रवन्मुखं तव करोत्यलं लोकमंगलम् ॥ ३ ॥ मम पतिस्त्वयं सर्वदुर्जयो यदि तवाप्रियं कर्मणाचरेत् । जहि तदात्मनः

शत्रुमुद्यतं कुरु कृपां न चेदीदृगीश्वरः ॥ ४ ॥ महदहंयुतं पंचमात्रया प्रकृतिजायया निर्मितं वपुः । तव निरीक्षणाल्लीलया जगत्स्थितिलयोदकं ब्रह्मकल्पितम् ॥ ५ ॥ भूवियन्मरुद्वारितेजसां राशिभिः शरीरेंद्रियाश्रितैः । त्रिगुणया स्वया मायया विभो कुरु कृपां भवत्सेवनार्थिनाम् ॥ ६ ॥ तव गुणालयं नाम पावनं कलिमलापहं कीर्तयंति ये । भवभयक्षयं तापतापिता मुहुरहो जनाः संसरंति नो ॥ ७ ॥ तव जनुः सतां मानवर्धनं जिनकुलक्षयं देवपालकम् । कृतयुगार्पकं धर्मपूरकं कलिकुलांतकं शं तनोतु मे ॥ ८ ॥ मम गृहं पतिपुत्रनप्तृकं गजरथैर्ध्वजैश्चामरैर्धनैः । मणिवरासनं सत्कृतिं विना तव पदाब्जयोः शोभयंति किम् ॥ ९ ॥ तव जगद्वपुः सुंदरस्मितं मुखमनिंदितं सुंदरारवम् । यदि न मे प्रियं वल्गुचेष्टितं परिकरोत्यहो मृत्युरस्त्विह ॥ १० ॥ हयचर भयहरकरहरशरणखरतरवरशर दशबलदमन । जय हतपरभर भववरनाशन शशधरशतसमरसभरमदन ॥ ११ ॥ इति श्रीकल्किपुराणे सुशांताकृतं कल्किस्तोत्रं संपूर्णम् ॥

## ३५५. दशावतारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ देवो नः शुभमातनोतु दशधा निर्वर्तयन् भूमिकां रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः । यद्भावेषु पृथग्विधेष्वनुगुणान्भावान्स्वयं बिभ्रती यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥ १ ॥ निर्मग्नः श्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणैरन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम् । निष्प्रत्यूहतरङ्गरिङ्गणमिथःप्रत्यूहपाथश्छटादोलारोहसदोहलं भगवतो मात्स्यं वपुः पातु नः ॥ २ ॥ अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा निद्राणस्य परस्य कूर्मवपुषो निःश्वासवातोर्मयः । यद्विक्षेपणसंस्कृतो-

दधिपयःप्रेङ्खोलपर्यङ्किकानित्यारोहणनिर्वृतो विहरते देवः सहैव श्रिया ॥ ३ ॥ गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृत-ब्रह्माण्डः प्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः । यद्दंष्ट्राङ्कुरकोटिगाढ-घटनानिष्कम्पनित्यस्थितिर्ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वं-भरा ॥ ४ ॥ प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैरव्यात्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः । यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां या काचित्सहसा महासुरगृहस्थूणा पितामह्य-भूत् ॥ ५ ॥ व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभटस्त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः । यत्प्रस्तावसमुच्छ्रितध्वज-पटीवृत्तान्तसिद्धान्तिभिः स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ॥ ६ ॥ क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन्क्रमादक्ष-त्रामपि संततक्षय इमां त्रिःसप्तकृत्वः क्षितिम् । दत्त्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्नब्रह्मण्यमपाकरोतु भग-वानाब्रह्मकीटं मुनिः ॥ ७ ॥ पारावारपयोविशोषणकलापारीण-कालानलज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः । सर्वा-वस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती धर्मो विग्रहवानधर्मविरतिं धन्वी स तन्वीत नः ॥ ८ ॥ फक्कत्कौरवपट्टणप्रभृतयः प्रास्तप्रलम्बादय-स्तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः । क्षीरं शर्कर-येव याभिरपृथग्भूताः प्रभूतैर्गुणैराकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥ ९ ॥ नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्रक्रमै-र्भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते । कालिंदीरसिकाय कालियफणिस्फारस्फटावाटिकारङ्गोत्सङ्गविशङ्कचङ्क्रमधुरापर्यायच-र्याय ते ॥ १० ॥ भाविन्या दशया भवन्निह भवध्वंसाय नः

कल्पतां कल्की विष्णुयशःसुतः कलिकथाकालुष्यकूलंकषः । निःशेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥ ११ ॥ इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् । क्रीडाबल्लव कल्कवाहन दशाकल्किन्निति प्रत्यहं जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥ १२ ॥ विद्योदन्वति वेङ्कटेश्वरकवौ जातौ जगन्मङ्गलं देवेशस्य दशावतारविषयं स्तोत्रं विवक्षेत यः । वक्त्रे तस्य सरस्वती बहुमुखी भक्तिः परा मानसे शुद्धिः कापि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥ १३ ॥ इति श्रीवेंकटेशार्यविरचितं दशावतारस्तोत्रं संपूर्णम् ॥

शैलेंद्रादवतारिणी निजजले मज्जज्जनोत्तारिणी

पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी ।



शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी

काशीप्रांतविहारिणी विजयते गंगा मनोहारिणी ॥

# गंगादिनदीस्तोत्राणि ।

## ३५६. दशहरागंगास्तुतिः ।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच ॥ नमः शिवायै गंगायै शिवदायै नमो नमः । नमस्ते रुद्ररूपिण्यै शांकर्यै ते नमो नमः ॥ १ ॥ नमस्ते विश्वरूपिण्यै ब्रह्ममूर्त्यै नमो नमः । सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥ २ ॥ सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तु ते । स्थाणुजंगमसंभूतविषहंत्र्यै नमो नमः ॥ ३ ॥ भोगोपभोगदायिन्यै भोगवत्यै नमो नमः । मंदाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ॥ ४ ॥ नमस्त्रैलोक्यभूषायै जगद्धात्र्यै नमो नमः । नमस्त्रिशुक्लसंस्थायै तेजोवत्यै नमो नमः ॥ ५ ॥ नंदायै लिंगधारिण्यै नारायण्यै नमो नमः । नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ॥ ६ ॥ बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमो नमः । नमस्ते विश्वमित्रायै नंदिन्यै ते नमो नमः ॥ ७ ॥ पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः । शांतायै च वरिष्ठायै वरदायै नमो नमः ॥ ८ ॥ उस्रायै सुखदोग्ध्र्यै च संजीविन्यै नमो नमः । ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः । प्रणतार्तिप्रभंजिन्यै जगन्मात्रे नमोऽस्तु ते ॥ ९ ॥ सर्वापत्प्रतिपक्षायै मंगलायै नमो नमः ॥ १० ॥ शरणागतदीनार्तपरित्राणपरायणे । सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ ११ ॥ निर्लेपायै दुर्गहंत्र्यै दक्षायै ते नमो नमः । परात्परतरे तुभ्यं नमस्ते मोक्षदे सदा ॥ १२ ॥ गंगे ममाग्रतो भूया गंगे मे देवि पृष्ठतः । गंगे मे पार्श्वयोरेहि त्वयि गंगेऽस्तु मे स्थितिः ॥ १३ ॥ आदौ त्वमंते मध्ये च सर्वं त्वं गां गते शिवे । त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः ॥ १४ ॥

गंगे त्वं परमात्मा च शिवस्तु नमः शिवे ॥ १५ ॥ य इदं पठति स्तोत्रं भक्त्या नित्यं नरोऽपि यः । शृणुयाच्छ्रद्धया युक्तः कायवाक्चित्तसंभवैः ॥ १६ ॥ दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते । सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते ॥ १७ ॥ ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता । तस्यां दशम्यामेतच्च स्तोत्रं गंगाजले स्थितः ॥ १८ ॥ यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः । सोऽपि तत्फलमाप्नोति गंगां संपूज्य यत्नतः ॥ १९ ॥ अदत्तानामुपादानं हिंसा चैवाविधानतः । परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ २० ॥ पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः । असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ २१ ॥ परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिंतनम् । वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥ २२ ॥ एतानि दश पापानि हर त्वं मम जाह्नवि । दशपापहरा यस्मात्तस्माद्दशहरा स्मृता ॥ २३ ॥ त्रयस्त्रिंशच्छतं पूर्वान् पितॄनथ पितामहान् । उद्धरत्येव संसारान्मंत्रेणानेन पूजिता ॥ २४ ॥ नमो भगवत्यै दशपापहरायै गंगायै नारायण्यै रेवत्यै शिवायै । दक्षायै अमृतायै विश्वरूपिण्यै नंदिन्यै ते नमो नमः ॥ २५ ॥ सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलशोद्यत्सोत्पलामत्यभीष्टाम् । विधिहरिहररूपां सेंदुकोटीरजुष्टां कलितसितदुकूलां जाह्नवीं तां नमामि ॥ २६ ॥ आदावादिपितामहस्य निगमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् । भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥ २७ ॥ गंगा गंगेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ २८ ॥ इति धर्माब्धिस्था दशहरागंगास्तुतिः संपूर्णा ॥

## ३५७. शंकराचार्यकृतं गंगाष्टकम् ।

श्रीगणेशाय नमः ॥ भगवति तव तीरे नीरमात्राशनोऽहं विगतविषयतृष्णः कृष्णमाराधयामि । सकलकलुषभंगे स्वर्गसोपानसंगे तरलतरतरंगे देवि गंगे प्रसीद ॥ १ ॥ भगवति भवलीलामौलिमाले तवांभःकणमणुपरिमाणं प्राणिनो ये स्पृशंति । अमरनगरनारीचामरग्राहिणीनां विगतकलिकलंकातंकमंके लुठंति ॥ २ ॥ ब्रह्मांडं खंडयती हरशिरसि जटावल्लिमुल्लासयंती स्वर्लोकादापतंती कनकगिरिगुहागंडशैलात्स्खलंती । क्षोणीपृष्ठे लुठंती दुरितचयचमूर्निर्भरं भर्त्सयंती पाथोधिं पूरयंती सुरनगरसरित्पावनी नः पुनातु ॥ ३ ॥ मज्जन्मातंगकुंभच्युतमदमदिरामोदमत्तालिजालं स्नानैः सिद्धांगनानां कुचयुगविगलत्कुंकुमासंगपिंगम् । सायंप्रातर्मुनीनां कुशकुसुमचयैश्छन्नतीरस्थनीरं पायान्नो गांगमंभः करिकलभकराक्रांतरंहस्तरंगम् ॥ ४ ॥ आदावादिपितामहस्य निगमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् । भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥ ५ ॥ शैलेंद्रादवतारिणी निजजले मज्जज्जनोत्तारिणी पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी । शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी काशीप्रांतविहारिणी विजयते गंगा मनोहारिणी ॥ ६ ॥ कुतोऽवीचिर्वीचिस्तव यदि गता लोचनपथं त्वमापीता पीतांबरपुरनिवासं वितरसि । त्वदुत्संगे गंगे पतति यदि कायस्तनुभृतां तदा मातः शातक्रतवपदलाभोऽप्यतिलघुः ॥ ७ ॥ गंगे त्रैलोक्यसारे सकलसुरवधूधौतविस्तीर्णतोये पूर्णब्रह्मस्वरूपे हरिचरणरजोहारिणि स्वर्गमार्गे । प्रायश्चित्तं यदि स्यात्तव जलकणिका ब्रह्महत्यादिपापे कस्त्वां स्तोतुं समर्थस्त्रिजग-

दघहरे देवि गङ्गे प्रसीद ॥ ८ ॥ मातर्जाह्नवि शंभुसंगवलिते मौलौ निधायांजलिं त्वत्तीरे वपुषोऽवसानसमये नारायणांघ्रिद्वयम् । सानंदं स्मरतो भविष्यति मम प्राणप्रयाणोत्सवो भूयाद्भक्तिरविच्युता हरिहराद्वैतात्मिका शाश्वती ॥ ९ ॥ गंगाष्टकमिदं पुण्यं यः पठेत्प्रयतो नरः । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं गंगाष्टकस्तोत्रं संपूर्णम् ॥

## ३५८. वाल्मीकिकृतं गंगाष्टकम् ।

श्रीगणेशाय नमः ॥ मातः शैलसुतासपत्नि वसुधाशृंगारहारावलि स्वर्गारोहणवैजयंति भवतीं भागीरथिं प्रार्थये । त्वत्तीरे वसतस्त्वदंबु पिबतस्त्वद्वीचिषु प्रेंखतस्त्वन्नाम स्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः ॥ १ ॥ त्वत्तीरे तरुकोटरांतरगतो गंगे विहंगो वरं त्वन्नीरे नरकांतकारिणि वरं मत्स्योऽथवा कच्छपः । नैवान्यत्र मदांधसिंधुरघटासंघट्टघंटारणत्कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥ २ ॥ उक्षा पक्षी तुरग उरगः कोऽपि वा वारणो वाऽवारीणः स्यां जननमरणक्लेशदुःखासहिष्णुः । न त्वन्यत्र प्रविरलरणत्कंकणक्काणमिश्रं वारस्त्रीभिश्चमरमरुता वीजितो भूमिपालः ॥ ३ ॥ काकैर्निष्कुषितं श्वभिः कवलितं गोमायुभिर्लुंठितं स्रोतोभिश्चलितं तटांबुलुलितं वीचीभिरांदोलितम् । दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानः कदा द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागीरथि स्वं वपुः ॥ ४ ॥ अभिनवबिसवल्ली पादपद्मस्य विष्णोर्मदनमथनमौलेर्मालतीपुष्पमाला । जयति जयपताका काप्यसौ मोक्षलक्ष्म्याः क्षपितकलिकलंका जाह्नवी नः पुनातु ॥ ५ ॥ एतत्तालतमालसालसर-

लभ्यालोलवल्लीलताच्छन्नं सूर्यकरप्रतापरहितं शंखेंदुकुंदोज्ज्वलम् । गंधर्वामरसिद्धकिन्नरवधूत्तुंगस्तनास्फालितं स्नानाय प्रतिवासरं भवतु मे गांगं जलं निर्मलम् ॥ ६ ॥ गांगं वारि मनोहारि मुरारिचरणच्युतम् । त्रिपुरारिशिरश्चारि पापहारि पुनातु माम् ॥ ७ ॥ पापापहारि दुरितारि तरंगधारि शैलप्रचारि गिरिराजगुहाविदारि । झंकारकारि हरिपादरजोपहारि गांगं पुनातु सततं शुभकारि वारि ॥ ८ ॥ गंगाष्टकं पठति यः प्रयतः प्रभाते वाल्मीकिना विरचितं शुभदं मनुष्यः । प्रक्षाल्य गात्रकलिकल्मषपंकमाशु मोक्षं लभेत्पतति नैव नरो भवाब्धौ ॥ ९ ॥ इति श्रीवाल्मीकिविरचितं गंगाष्टकं संपूर्णम् ॥

## ३५९. कालिदासकृतं गंगाष्टकम् ।

श्रीगणेशाय नमः ॥ कत्यक्षीणि करोटयः कति कति द्वीपिद्विपानां त्वचः काकोलाः कति पन्नगाः कति सुधाधाम्नश्च खंडाः कति । किं च त्वं च कति त्रिलोकजननि त्वद्वारिपूरोदरे मज्जज्जंतुकदंबकं समुदयत्यैकैकमादाय यत् ॥ १ ॥ देवि त्वत्पुलिनांगणे स्थितिजुषां निर्मौनिनां ज्ञानिनां स्वल्पाहारनिबद्धशुद्धवपुषां तार्णं गृहं श्रेयसे । नान्यत्र क्षितिमंडलेश्वरशतैः संरक्षितो भूपतेः प्रासादो ललनागणैरधिगतो भोगींद्रभोगोन्नतः ॥ २ ॥ तत्तत्तीर्थगतैः कदर्थनशतैः किं तैरनर्थाश्रितैर्ज्योतिष्टोममुखैः किमीशविमुखैर्यज्ञैरवज्ञाहतैः । सूते केशववासवादिविबुधागाराभिरामां श्रियं गंगे देवि भवत्तटे यदि कुटीवासः प्रयासं विना ॥ ३ ॥ गंगातीरमुपेत्य शीतलशिलामालंब्य हेमाचलीं यैराकर्णि कुतूहलाकुलतया कल्लोलकोलाहलः । ते शृण्वंति सुपर्वपर्वतशिलासिंहासनाध्यासनाः संगीतागमशुद्धसिद्धरमणीमंजीरधीरध्वनिम् ॥ ४ ॥ दूरं गच्छ सकच्छगं च भवतो

नालोकयामो मुखं रे पाराक वराक साकमितरैर्नाकप्रदैर्गम्यताम् । सद्यः प्रोद्यतमंदमारुतरजःप्राप्ता कपोलस्थले गंगांभःकणिका विमुक्तगणिकासंगाय संभाव्यते ॥ ५ ॥ विष्णोः संगतिकारिणी हरजटाजूटाटवीचारिणी प्रायश्चित्तनिवारिणी जलकणैः पुण्यौघविस्तारिणी । भूभृत्कंदरदारिणी निजजले मज्जज्जनोत्तारिणी श्रेयःस्वर्गविहारिणी विजयते गंगा मनोहारिणी ॥ ६ ॥ वाचालं विकलं खलं श्रितमलं कामाकुलं व्याकुलं चांडालं तरलं निपीतगरलं दोषाविलं चाखिलम् । कुंभीपाकगतं तमंतककरादाकृष्य कस्तारयेन्मातर्जह्नुनरेंद्रनंदिनि तव स्वल्पोदबिन्दुं विना ॥ ७ ॥ श्लेष्मश्लेषणयानलेऽमृतबिले शोकाकुले व्याकुले कंठे घर्घरघोषनादमलिने काये च संमीलति । यां ध्यायन्नपि भारभंगुरतरां प्राप्नोति मुक्तिं नरः स्नातुश्चेतसि जाह्नवीनिवसतां संसारसंतापहृत् ॥ ८ ॥ इति श्रीमत्कालिदासविरचितं गंगाष्टकस्तोत्रं संपूर्णम् ॥

## ३६०. गंगाष्टकम् ।

श्रीगणेशाय नमः ॥ नमस्तेऽस्तु गंगे त्वदंगप्रसंगाद्भुजंगास्तुरंगाः कुरंगाः प्लवंगाः । अनंगारिरंगाः ससंगाः शिवांगा भुजंगाधिपांगीकृतांगा भवंति ॥ १ ॥ नमो जह्नुकन्ये न मन्ये त्वदन्यैर्निसर्गेंदुचिह्नादिभिर्लोकभर्तुः । अतोऽहं नतोऽहं सतो गौरतोये वसिष्ठादिभिर्गीयमानाभिधेये ॥ २ ॥ त्वदामज्जनात्सज्जनो दुर्जनो वा विमानैः समानः समानैर्हि मानैः । समायाति तस्मिन्पुरारातिलोके पुरद्वारसंरुद्धदिक्पाललोके ॥ ३ ॥ स्वरावासदंभोलिदंभोऽपि रंभापरीरंभसंभावनाधीरचेताः । समाकांक्षते त्वत्तटे वृक्षवाटीकुटीरे वसन्नेतुमायुर्दिनानि ॥ ४ ॥ त्रिलोकस्य भर्तुर्जटाजूटबंधात्स्वसीमांतभागे मनाक्प्रस्खलंतः । भवान्या रुषा प्रौढसापत्नभावात्करेणा-

हतास्त्वत्तरंगा जयंति ॥ ५ ॥ जलोन्मज्जदैरावतोद्दानकुंभस्फुरत्प्रस्खलत्सांद्रसिंदूररागे । क्वचित्पद्मिनीरेणुभंगे प्रसंगे मनः खेलतां जह्नुकन्यातरंगे ॥ ६ ॥ भवत्तीरवानीरवातोत्थधूलीलवस्पर्शतस्तत्क्षणं क्षीणपापः । जनोऽयं जगत्पावने त्वत्प्रसादात्पदे पौरुहूतेऽपि धत्तेऽवहेलाम् ॥ ७ ॥ त्रिसंध्यानमल्लेखकोटीरनानाविधानेकरत्नांशुबिंबप्रभाभिः । स्फुरत्पादपीठे हठेनाष्टमूर्तेर्जटाजूटवासे नताः स्मः पदं ते ॥ ८ ॥ इदं यः पठेदष्टकं जह्नुपुत्र्यास्त्रिकालं कृतं कालिदासेन रम्यम् । समायास्यतींद्रादिभिर्गीयमानं पदं कैशवं शैशवं नो लभेत्सः ॥ ९ ॥ इति श्रीकालिदासकृतं गंगाष्टकस्तोत्रं संपूर्णम् ॥

## ३६१. गंगास्तवः ।

श्रीगणेशाय नमः ॥ सूत उवाच ॥ शृणुध्वं मुनयः सर्वे गंगास्तवमनुत्तमम् । शोकमोहहरं पुंसामृषिभिः परिकीर्तितम् ॥ १ ॥ ऋषय ऊचुः ॥ इयं सुरतरंगिणी भवनवारिधेस्तारिणी स्तुता हरिपदांबुजादुपगता जगत्संसदः । सुमेरुशिखरामरप्रियजला मलक्षालिनी प्रसन्नवदना शुभा भवभयस्य विद्राविणी ॥ २ ॥ भगीरथरथानुगा सुरकरींद्रदर्पापहा महेशमुकुटप्रभा गिरिशिरःपताका सिता । सुरासुरनरोरगैरजभवाच्युतैः संस्तुता विमुक्तिफलशालिनी कलुषनाशिनी राजते ॥ ३ ॥ पितामहकमंडलुप्रभवमुक्तिबीजा लता श्रुतिस्मृतिगणस्तुतद्विजकुलालवालावृता । सुमेरुशिखराभिदा निपतिता त्रिलोकावृता सुधर्मफलशालिनी सुखपलाशिनी राजते ॥ ४ ॥ चरद्विहगमालिनी सगरवंशमुक्तिप्रदा मुनींद्रवरनंदिनी दिवि मता च मंदाकिनी । सदा दुरितनाशिनी विमलवारिसंदर्शनप्रणामगुणकीर्तनादिषु जगत्सु संराजते ॥ ५ ॥ महाभिषसुतांगना हिमगिरीशकूटस्तना सफेनजलहासिनी सितमरालसंचारिणी । चलल्लहरि-

सत्करा वरसरोजमालाधरा रसोल्लसितगामिनी जलधिकामिनी राजते ॥ ६ ॥ क्वचिन्मुनिगणैः स्तुता क्वचिदनंतसंपूजिता क्वचित्कलकलस्वना क्वचिदधीरयादोगणा । क्वचिद्रविकरोज्ज्वला क्वचिदुदग्रपाताकुला क्वचिज्जनविगाहिता जयति भीष्ममाता सती ॥ ७ ॥ स एव कुशली जनः प्रणमतीह भागीरथीं स एव तपसां निधिर्जपति जाह्नवीमादरात् । स एव पुरुषोत्तमः स्मरति साधु मंदाकिनीं स एव विजयी प्रभुः सुरतरंगिणीं सेवते ॥ ८ ॥ तवामलजलाचितं खगशृगालमीनक्षतं चलल्लहरिलोलितं रुचिरतीरजंबालितम् । कदा निजवपुर्मुदा सुरनरोरगैः संस्तुतोऽप्यहं त्रिपथगामिनि प्रियमतीव पश्याम्यहो ॥ ९ ॥ त्वत्तीरे वसतिं तवामलजलस्नानं तव प्रेक्षणं त्वन्नामस्मरणं तवोदयकथासंलापनं पावनम् । गंगे मे तव सेवनैकनिपुणोऽप्यानंदितश्चादृतः स्तुत्वा चोद्गतपातको भुवि कदा शांतश्चरिष्याम्यहम् ॥ १० ॥ इत्येतदृषिभिः प्रोक्तं गंगास्तवनमुत्तमम् । स्वर्ग्यं यशस्यमायुष्यं पठनाच्छ्रवणादपि ॥ ११ ॥ सर्वपापहरं पुंसां बलमायुर्विवर्धनम् । प्रातर्मध्याह्नसायाह्ने गंगासान्निध्यता भवेत् ॥ १२ ॥ इत्येतद्भार्गवाख्यानं शुकदेवान्मया श्रुतम् । पठितं श्रावितं चात्र पुण्यं धन्यं यशस्करम् ॥ १३ ॥ अवतारं महाविष्णोः कल्केः परममद्भुतम् । पठतां शृण्वतां भक्त्या सर्वाशुभविनाशनम् ॥ १४ ॥ इति श्रीकल्किपुराणेऽनुभागवते भविष्ये तृतीयांशे ऋषिकृतो गंगास्तवः संपूर्णः ॥

## ३६२. सत्यज्ञानानंदतीर्थकृतं गंगाष्टकम् ।

श्रीगणेशाय नमः ॥ यदवधि तव नीरं पातकी नैति गंगे तदवधि मलजालैर्नैव मुक्तः कलौ स्यात् । तव जलकणिकाऽलं पापिनां पापशुद्ध्यै पतितपरमदीनाँस्त्वं हि पासि प्रपन्नान् ॥ १ ॥ तव शिव-

जललेशं वायुनीतं समेत्य सपदि निरयजालं शून्यतामेति गंगे। शमलगिरिसमूहाः प्रस्फुटंति प्रचंडास्त्वयि सखि विशतां नः पापशंका कुतः स्यात् ॥ २ ॥ तव शिवजलजालं निःसृतं यर्हि गंगे सकलभुवनजालं पूतपूतं तदाऽभूत्। यमभटकलिवार्ता देवि लुप्ता यमोऽपि व्यधिकृतवरदेहः पूर्णकामाः सकामाः ॥ ३ ॥ मधुमधुवनपूगै रत्नपूगैर्नृपूगैर्मधुमधुवनपूगैर्देवपूगैः सपूगैः । पुरहरपरमांगे भासि मायेव गंगे शमयसि विषतापं देवदेवस्य वंद्यम् ॥ ४ ॥ चलितशशिकुलाभैरुत्तरंगैस्तरंगैरमितनदनदीनामंगसंगैरसंगैः। विहरसि जगदंडे खंडयंती गिरींद्रान् रमयसि निजकांतं सागरं कांतकांते ॥ ५ ॥ तव परमहिमानं चित्तवाचाममानं हरिहरविधिशक्रा नापि गंगे विदंति। श्रुतिकुलमभिधत्ते शंकितं तं गुणांतं गुणगणसुविलापैर्नेति नेतीति सत्यम् ॥ ६ ॥ तव नुतिनतिनामान्यप्यघं पावयंति ददति परमशांतिं दिव्यभोगान् जनानाम्। इति पतितशरण्ये त्वां प्रपन्नोऽस्मि मातर्ललिततरतरंगे चांग गंगे प्रसीद ॥ ७ ॥ शुभतरकृतयोगाद्विश्वनाथप्रसादाद्भवहरवरविद्यां प्राप्य काश्यां हि गंगे। भगवति तव तीरे नीरसारं निपीय मुदितहृदयकंजे नंदसूनुं भजेऽहम् ॥ ८ ॥ गंगाष्टकमिदं कृत्वा भुक्तिमुक्तिप्रदं नृणाम् । सत्यज्ञानानंदतीर्थयतिना स्वार्पितं शिवे ॥ ९ ॥ तेन प्रीणातु भगवान् शिवो गंगाधरो विभुः। करोतु शंकरः काश्यां जनानां सततं शिवम् ॥ १० ॥ इति श्रीसत्यज्ञानानंदतीर्थयतिना विरचितं गंगाष्टकं संपूर्णम् ॥

## २६३. प्रयागराजमाहात्म्याष्टकम्।

श्रीगणेशाय नमः ॥ मुनय ऊचुः ॥ सुरमुनिदितिजेंद्रैः सेव्यते योऽस्ततंद्रैर्गुरुतरदुरितानां का कथा मानवानाम्। स भुवि सुकृत-

कर्तुर्वांछितावाप्तिहेतुर्जयति विजितयागस्तीर्थराजः प्रयागः ॥ १ ॥ श्रुतिः प्रमाणं स्मृतयः प्रमाणं पुराणमप्यत्र परं प्रमाणम् । यत्रास्ति गंगा यमुना प्रमाणं स तीर्थराजो जयति प्रयागः ॥ २ ॥ न यत्र योगाचरणप्रतीक्षा न यत्र यज्ञेष्टिविशिष्टदीक्षा । न तारकज्ञानगुरोरपेक्षा स तीर्थराजो जयति प्रयागः ॥ ३ ॥ चिरं निवासं न समीक्षते यो ह्युदारचित्तः प्रददाति च क्रमात् । यः कल्पितार्थांश्च ददाति पुंसः स तीर्थराजो० ॥ ४ ॥ यत्राप्लुतानां न यमो नियंता यत्रास्थितानां सुगतिप्रदाता । यत्राश्रितानाममृतप्रदाता स तीर्थराजो० ॥ ५ ॥ पुर्यः सप्त प्रसिद्धाः प्रतिवचनकरीस्तीर्थराजस्य नार्यो नैकव्यान्मुक्तिदाने प्रभवति सुगुणा काशते ब्रह्म यस्याम् । सेयं राज्ञी प्रधाना प्रियवचनकरी मुक्तिदानेन युक्ता येन ब्रह्मांडमध्ये स जयति सुतरां तीर्थराजः प्रयागः ॥ ६ ॥ तीर्थावली यस्य तु कंठभागे दानावली वल्गति पादमूले । व्रतावली दक्षिणपादमूले स तीर्थराजो जयति प्रयागः ॥ ७ ॥ आज्ञापि यज्ञाः प्रभवोऽपि यज्ञाः सप्तर्षिसिद्धाः सुकृतानभिज्ञाः । विज्ञापयंतः सततं हि काले स तीर्थ० ॥ ८ ॥ सितासिते यत्र तरंगचामरे नद्यौ विभाते मुनिभानुकन्यके । लीलातपत्रं वट एक साक्षात्स तीर्थराजो ज० ॥ ९ ॥ तीर्थराजप्रयागस्य माहात्म्यं कथयिष्यति । शृण्वन्वा सततं भक्त्या वाञ्छितं फलमाप्नुयात् ॥ १० ॥ इति श्रीमत्स्यपुराणे प्रयागराजमाहात्म्याष्टकं समाप्तम् ॥

## २६४. काशीपंचकम् ।

श्रीगणेशाय नमः ॥ मनोनिवृत्तिः परमोपशांतिः सा तीर्थवर्या मणिकर्णिका च । ज्ञानप्रवाहा विमलादिगंगा सा काशिकाहं निजबोधरूपा ॥ १ ॥ यस्यामिदं कल्पितमिंद्रजालं चराचरं भाति

मनोविलासम् । सच्चित्सुखैका परमात्मरूपा सा काशिका० ॥ २ ॥ कोशेषु पंचस्वधिराजमाना बुद्धिर्भवानी प्रतिदेहगेहम् । साक्षी शिवः सर्वगतोऽन्तरात्मा सा काशिका० ॥ ३ ॥ काश्यां हि काश्यते काशी काशी सर्वप्रकाशिका । सा काशी विदिता येन तेन प्राप्ता हि काशिका ॥ ४ ॥ काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगंगा भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः । विश्वेशोऽयं तुरीयः सकलजनमनःसाक्षिभूतोऽन्तरात्मा देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत्किमस्ति ॥ ५ ॥ इति श्रीमच्छंकराचार्यविरचितं काशीपंचकं संपूर्णम् ॥

## ३६५. यमुनाष्टकम् ।

श्रीगणेशाय नमः ॥ मुरारिकायकालिमाललामवारिधारिणी तृणीकृतत्रिविष्टपा त्रिलोकशोकहारिणी । मनोऽनुकूलकूलकुंजपुंजधूतदुर्मदा धुनोतु मे मनोमलं कलिंदनंदिनी सदा ॥ १ ॥ मलापहारिवारिपूरिभूरिमंडितामृता भृशं प्रपातकप्रपंचनातिपंडिता निशा । सुनंदनंदिनांगसंगरागरंजिता हिता धुनोतु० ॥ २ ॥ लसत्तरंगसंगधूतभूतजातपातका नवीनमाधुरीधुरीणभक्तिजातचातका । तटांतवासदासहंससंसृताह्नि कामदा धुनोतु० ॥ ३ ॥ विहाररासखेदभेदधीरतीरमारुता गता गिरामगोचरे यदीयनीरचारुता । प्रवाहसाहचर्यपूतमेदिनीनदीनदा धुनोतु० ॥ ४ ॥ तरंगसंगसैकतांतरांतितं सदासिता शरन्निशाकरांशुमंजुमंजरीसभाजिता । भवार्चनाप्रचारुणांबुनाधुनाविशारदा धुनोतु० ॥ ५ ॥ जलांतकेलिकारिचारुराधिकांगरागिणी स्वभर्तुरन्यदुर्लभांगतांगतांशभागिनी । स्वदत्तसुप्तसप्तसिंधुभेदनातिकोविदा धुनोतु० ॥ ६ ॥ जलच्युताच्युतांगरागलंपटालिशालिनी विलोलराधिकाकचांतचंपकालिमालिनी । सदावगाहनावतीर्णभर्तृ-

भृत्यनारदा धुनोतु० ॥ ७ ॥ सदैव नंदनंदकेलिशालिकुंजमंजुला तटोत्थफुल्लमल्लिकाकदंबरेणुसूज्ज्वला । जलावगाहिनां नृणां भवाब्धिसिंधुपारदा धुनोतु० ॥ ८ ॥ इति श्रीमच्छंकराचार्यविरचितं यमुनाष्टकं संपूर्णम् ॥

## ३६६. यमुनाष्टकम् ।

श्रीगणेशाय नमः ॥ कृपापारावारां तपनतनयां तापशमनीं मुरारिप्रेयस्यां भवभयदवां भक्तिवरदाम् । वियज्जालान्मुक्तां श्रियमपि सुखाप्तेः प्रतिदिनं सदा धीरो नूनं भजति यमुनां नित्यफलदाम् ॥ १ ॥ मधुवनचारिणि भास्करवाहिनि जाह्नविसंगिनि सिंधुसुते मधुरिपुभूषिणि माधवतोषिणि गोकुलभीतिविनाशकृते । जगदघमोचनि मानसदायिनि केशवकेलिनिदानगते जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥ २ ॥ अयि मधुरे मधुमोदविलासिनि शैलविहारिणि वेगभरे परिजनपालिनि दुष्टनिषूदिनि वांछितकामविलासधरे । व्रजपुरवासिजनार्जितपातकहारिणि विश्वजनोद्धरिके जय यमुने जय भीतिनिवा० ॥ ३ ॥ अतिविपदम्बुधिमग्नजनं भवतापशताकुलमानसकं गतिमतिहीनमशेषभयाकुलमागतपादसरोजयुगम् । ऋणभयभीतिमनिष्कृतिपातककोटिशतायुतपुंजतरं जय यमुने० ॥ ४ ॥ नवजलदद्युतिकोटिलसत्तनुहेममयाभररंजितके तडिदवहेलिपदांचलचंचलशोभितपीतसुचैलधरे । मणिभयभूषणचित्रपटासनरंजितगंजितभानुकरे जय यमुने० ॥ ५ ॥ शुभपुलिने मधुमत्तयदूद्भवरासमहोत्सवकेलिभरे उच्चकुलाचलराजितमौक्तिकहारमयाभररोदसिके । नवमणिकोटिकभास्करकंचुकिशोभिततारकहारयुते जय यमुने० ॥६॥ करिवरमौक्तिकनासिकभूषणवातचमत्कृतचंचलके मुखकमलामलसौरभचंचलमत्तमधुव्रतलोचनिके ।

मणिगणकुंडललोलपरिस्फुरदाकुलगण्डयुगामलके जय यमुने० ॥ ७ ॥ कलरवनूपुरहेममयाचितपादसरोरुहसारुणिके धिमिधिमिधिमिधिमितालविनोदितमानसमंजुलपादगते । तव पदपंकजमाश्रितमानवचित्तसदाखिलतापहरे जय यमुने० ॥ ८ ॥ भवोत्तापांभोधौ निपतितजनो दुर्गतियुतो यदि स्तौति प्रातः प्रतिदिनमनन्याश्रयतया । हयाह्रेषैः कामं करकुसुमपुंजैरविरतां सदा भोक्ता भोगान्मरणसमये याति हरिताम् ॥ ९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं यमुनाष्टकं संपूर्णम् ॥

## ३६७. नर्मदाष्टकम् ।

श्रीगणेशाय नमः ॥ सबिंदुसिंधुसुस्खलत्तरंगभंगरंजितं द्विषत्सु पापजातजातकारि वारिसंयुतम् । कृतांतदूतकालभूतभीतिहारिवर्मदे त्वदीयपादपंकजं नमामि देवि नर्मदे ॥ १ ॥ त्वदंबुलीनदीनमीनदिव्यसंप्रदायकं कलौ मलौघभारहारि सर्वतीर्थनायकम् । सुमत्स्यकच्छनक्रचक्रचक्रवाकशर्मदे त्वदीयपादपंकजं नमामि देवि नर्मदे ॥ २ ॥ महागभीरनीरपूरपापधूतभूतलं ध्वनत्समस्तपातकारिदारितापदाचलम् । जगल्लये महाभये मृकंडुसूनुहर्म्यदे त्वदीयपादपं० ॥ ३ ॥ गतं तदैव मे भयं त्वदंबु वीक्षितं यदा मृकंडुसूनुशौनकासुरारिसेवि सर्वदा । पुनर्भवाब्धिजन्मजं भवाब्धिदुःखवर्मदे त्वदीयपादपं० ॥ ४ ॥ अलक्षलक्षकिन्नरामरासुरादिपूजितं सुलक्षनीरतीरधीरपक्षिलक्षकूजितम् । वशिष्ठशिष्टपिप्पलादिकर्दमादिशर्मदे त्वदीयपाद० ॥ ५ ॥ सनत्कुमारनाचिकेतकश्यपात्रिषट्पदैर्धृतं स्वकीयमानसेषु नारदादिषट्पदैः । रवींदुरंतिदेवदेवराजकर्मशर्मदे त्वदीयपाद० ॥ ६ ॥ अलक्षलक्षलक्षपापलक्षसारसायुधं ततस्तु जीवजंतुतंतुभुक्तिमुक्तिदायकम् । विरिंचिविष्णुशंकरस्वकीय-

धामवर्मदे त्वदीयपाद० ॥ ७ ॥ अहो मृतं स्वनं श्रुतं महेशकेशजातटे किरातसूतवाडवेषु पंडिते शठे नटे । दुरंतपापतापहारिसर्वजंतुशर्मदे त्वदीय० ॥ ८ ॥ इदं तु नर्मदाष्टकं त्रिकालमेव ये सदा पठंति ते निरंतरं न यांति दुर्गतिं कदा । सुलभ्यदेहदुर्लभं महेशधामगौरवं पुनर्भवा नरा न वै विलोकयंति रौरवम् ॥ ९ ॥ इति श्रीमच्छंकराचार्यविरचितं नर्मदाष्टकस्तोत्रं संपूर्णम् ॥

## ३६८. पुष्कराष्टकम् ।

श्रीगणेशाय नमः ॥ श्रिया युतं त्रिदेहतापपापराशिनाशकं मुनींद्रसिद्धसाध्यदेवदानवैरभिष्टुतम् । तटेऽस्ति यज्ञपर्वतस्य मुक्तिदं सुखाकरं नमामि ब्रह्मपुष्करं सवैष्णवं सशंकरम् ॥ १ ॥ सदार्यमासशुष्कपंचवासरे वरागतं तदन्यथांतरिक्षगं सुतंत्रभावनानुगम् । तदंबुपानमज्जनं दृशां सदामृताकरं नमामि० ॥ २ ॥ त्रिपुष्कर त्रिपुष्कर त्रिपुष्करेति संस्मरेत् स दूरदेशगोऽपि यस्तदंगपापनाशनम् । प्रपन्नदुःखभंजनं सुरंजनं सुधाकरं नमामि० ॥ ३ ॥ मृकंडुमंकणौ पुलस्त्यकण्वपर्वतासिता अगस्त्यभार्गवौ दधीचिनारदौ शुकादयः । सपद्मतीर्थपावनैकदृष्टयो दयाकरं नमामि० ॥ ४ ॥ सदा पितामहेक्षितं वराहविष्णुनेक्षितं तथाऽमरेश्वरेक्षितं सुरासुरैः समीक्षितम् । इहैव भुक्तिमुक्तिदं प्रजाकरं धनाकरं नमामि० ॥ ५ ॥ त्रिदंडिदंडिब्रह्मचारितापसैः सुसेवितं पुरार्धचंद्रमासदेवनंदिकेश्वराभिधैः । सवैद्यनाथनीलकंठसेवितं सुधाकरं नमामि० ॥ ६ ॥ सुपंचधा सरस्वती विराजते यदंतरे तथैकयोजनायतं विभाति तीर्थनायकम् । अनेकदैवपैत्रतीर्थसागरं रसाकरं नमामि० ॥ ७ ॥ यमादिसंयुतो नरस्त्रिपुष्करं निमज्जति पितामहश्च माधवोऽप्युमाधवः प्रसन्नताम् । प्रयाति तत्पदं ददात्ययत्नतो गुणाकरं

नमामि० ॥ ८ ॥ इदं हि पुष्कराष्टकं सुनीतिनीरजाश्रितं स्थितं मदीयमानसे कदापि माऽपगच्छतु । त्रिसंध्यमापठंति ये त्रिपुष्कराष्टकं नराः प्रदीप्तदेहभूषणा भवंति मेशकिंकराः ॥ ९ ॥ इति श्रीपुष्कराष्टकं समाप्तम् ॥

## ३६९. श्रीमणिकर्णिकाष्टकम् ।

श्रीगणेशाय नमः ॥ त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ वादं तौ कुरुतः परस्परमुभौ जंतोः प्रयाणोत्सवे । मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्तः शिवस्तत्क्षणात्तन्मध्याद्भृगुलांछनो गरुडगः पीतांबरो निर्गतः ॥ १ ॥ इंद्राद्यास्त्रिदशाः पतंति नियतं भोगक्षये ते पुनर्जायंते मनुजास्ततोऽपि पशवः कीटाः पतंगादयः । ये मातर्मणिकर्णिके तव जले मज्जंति निष्कल्मषाः सायुज्येऽपि किरीटकौस्तुभधरा नारायणाः स्युर्नराः ॥ २ ॥ काशी धन्यतमा विमुक्तिनगरी सालंकृता गंगया तत्रेयं मणिकर्णिका सुखकरी मुक्तिर्हि तत्किंकरी । स्वर्लोकस्तुलितः सहैव विबुधैः काश्या समं ब्रह्मणा काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुः खे गतः ॥ ३ ॥ गंगातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा तस्यां सा मणिकर्णिकोत्तमतमा यत्रेश्वरो मुक्तिदः । देवानामपि दुर्लभं स्थलमिदं पापौघनाशक्षमं पूर्वोपार्जितपुण्यपुंजगमकं पुण्यैर्जनैः प्राप्यते ॥ ४ ॥ दुःखांभोनिधिमग्नजंतुनिवहास्तेषां कथं निष्कृतिर्ज्ञात्वैतद्धि विरंचिना विरचिता वाराणसी शर्मदा । लोकाः स्वर्गसुखास्ततोऽपि लघवो भोगांतपातप्रदाः काशी मुक्तिपुरी सदा शिवकरी धर्मार्थकामोत्तरा ॥ ५ ॥ एको वेणुधरो धराधरधरः श्रीवत्सभूषाधरो योऽप्येकः किल शंकरो विषधरो गंगाधरो माधवः । ये मातर्मणिकर्णिके तव जले मज्जंति ते मानवा रुद्रा वा हरयो भवंति

बहवस्तेषां बहुत्वं कथम् ॥ ६ ॥ त्वत्तीरे मरणं तु मंगलकरं देवैरपि श्लाघ्यते शक्रस्तं मनुजं सहस्रनयनैर्द्रष्टुं सदा तत्परः । आयांतं सविता सहस्रकिरणैः प्रत्युद्गतोऽभूत्सदा पुण्योऽसौ वृषगोऽथवा गरुडगः किं मंदिरं यास्यति ॥ ७ ॥ मध्याह्ने मणिकर्णिकास्नपनजं पुण्यं न वक्तुं क्षमः स्वीयैरब्दशतैश्चतुर्मुखसुरो वेदार्थदीक्षागुरुः । योगाभ्यासबलेन चंद्रशिखरस्तत्पुण्यपारं गतस्त्वत्तीरे प्रकरोति सुप्तपुरुषं नारायणं वा शिवम् ॥ ८ ॥ कृच्छ्रैः कोटिशतैः स्वपापनिधनं यच्चाश्वमेधैः फलं तत्सर्वं मणिकर्णिकास्नपनजे पुण्ये प्रविष्टं भवेत् । स्नात्वा स्तोत्रमिदं नरः पठति चेत्संसारपाथोनिधिं तीर्त्वा पल्वलवत्प्रयाति सदनं तेजोमयं ब्रह्मणः ॥ ९ ॥ इति श्रीमच्छंकराचार्यविरचितं श्रीमणिकर्णिकाष्टकस्तोत्रं संपूर्णम् ॥

## ३७०. गङ्गालहरी ।

श्रीगणेशाय नमः ॥ समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्महैश्वर्यं लीलाजनितजगतः खण्डपरशोः । श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां सुधासौन्दर्यं ते सलिलमशिवं नः शमयतु ॥ १ ॥ दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां द्रुतं दूरीकुर्वन्सकृदुपगतो दृष्टिसरणिम् । अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥ २ ॥ उदञ्चन्मार्तण्डस्फुटकपटहेरम्बजननीकटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहाः । भवन्तु त्वङ्गन्तो हरशिरसि गङ्गातनुभुवस्तरङ्गाः प्रोत्तुङ्गा दुरितभयभङ्गाय भवताम् ॥ ३ ॥ तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः । इदानीमौदास्यं भजसि यदि भागीरथि तदा निराधारो हा रोदिमि कथय केषामिह पुरः ॥ ४ ॥ स्मृतिं याता पुंसामकृतसुकृतानामपि च या हरत्यन्तस्तन्द्रां

तिमिरमिव चन्द्रांशुसरणिः । इयं सा ते मूर्तिः सकलसुरसंसेव्य-सलिला ममान्तःसंतापं त्रिविधमपि पापं च हरताम् ॥ ५ ॥ अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा विलोलद्वानीरं तव जननि तीरं श्रितवताम् । सुधातः स्वादीयः सलिलभरमातृप्ति पिबतां जनानामानन्दः परिहसति निर्वाणपदवीम् ॥ ६ ॥ प्रभाते स्नान्तीनां नृपतिरमणीनां कुचतटीगतो यावन्मातर्मिलति तव तोयैर्मृगमदः । मृगास्तावद्वैमानिकशतसहस्रैः परिवृता विशन्ति स्वच्छन्दं विमल-वपुषो नन्दनवनम् ॥ ७ ॥ स्मृतं सद्यः स्वान्तं विरचयति शान्तं सकृदपि प्रगीतं यत्पापं झटिति भवतापं च हरति । इदं तद्गङ्गेति श्रवणरमणीयं खलु पदं मम प्राणप्रान्ते वदनकमलान्तर्विलसतु ॥ ८ ॥ यदन्तः खेलन्तो बहुलतरसंतोषभरिता न काका नाकाधी-श्वरनगरसाकाङ्क्षमनसः । निवासाल्लोकानां जनिमरणशोकापहरणं तदेतत्ते तीरं श्रमशमनधीरं भवतु नः ॥ ९ ॥ न यत्साक्षाद्वेदैरपि गलितभेदैरवसितं न यस्मिञ्जीवानां प्रसरति मनोवागवसरः । निराकारं नित्यं निजमहिमनिर्वासिततमो विशुद्धं यत्तत्त्वं सुरतटिनि तत्त्वं न विषयः ॥ १० ॥ महादानैर्ध्यानैर्बहुविधवितानैरपि च यन्न लभ्यं घोराभिः सुविमलतपोराशिभिरपि । अचिन्त्यं तद्विष्णोः पदमखिलसाधारणतया ददाना केनासि त्वमिह तुलनीया कथय नः ॥ ११ ॥ नृणामीक्षामात्रादपि परिहरन्त्या भवभयं शिवायास्ते मूर्तेः क इह महिमानं निगदतु । अमर्षम्लानायाः परममनुरोधं गिरिभुवो विहाय श्रीकण्ठः शिरसि नियतं धारयति याम् ॥ १२ ॥ विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितैरवाच्यानि व्रात्यैः सपुलक-मपास्यानि पिशुनैः । हरन्ती लोकानामनवरतमेनांसि कियतां कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे ॥ १३ ॥ स्खलन्ती

स्वर्लोकादवनितलशोकापहृतये जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा। अये निर्लोभानामपि मनसि लोभं जनयतां गुणानामेवायं तव जननि दोषः परिणतः ॥ १४ ॥ जडानन्धान्पङ्गून् प्रकृतिबधिरानुक्तिविकलान् ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन्। निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो नरानम्ब त्रातुं त्वमिह परमं भेषजमसि ॥ १५ ॥ स्वभावस्वच्छानां सहजशिशिराणामयमपामपारस्ते मातर्जयति महिमा कोऽपि जगति। मुदा यं गायन्ति द्युतलमनवद्यद्युतिभृतः समासाद्याद्यापि स्फुटपुलकसान्द्राः सगरजाः ॥ १६ ॥ कृतक्षुद्रैनस्कानथ झटिति संतप्तमनसः समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः। अपि प्रायश्चित्तप्रसरणपथातीतचरितान् नरान्दूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥ १७ ॥ निधानं धर्माणां किमपि च विधानं नवमुदां प्रधानं तीर्थानाममलपरिधानं त्रिजगतः। समाधानं बुद्धेरथ खलु तिरोधानमधियां श्रियामाधानं नः परिहरतु तापं तव वपुः ॥ १८ ॥ पुरो धावंधावं द्रविणमदिराघूर्णितदृशां महीपानां नानातरुणतरखेदस्य नियतम्। ममैवायं मन्तुः स्वहितशतहन्तुर्जडधियो वियोगस्ते मातर्यदिह करुणातः क्षणमपि ॥ १९ ॥ मरुल्लीलालोलल्लहरिलुलिताम्भोजपटलीस्खलत्पांसुव्रातच्छुरणविसरत्कौङ्कुमरुचि। सुरस्त्रीवक्षोजक्षरदगरुजम्बालजटिलं जलं ते जम्बालं मम जननजालं जरयतु ॥ २० ॥ समुत्पत्तिः पद्मारमणपदपद्मामलनखान्निवासः कन्दर्पप्रतिभटजटाजूटभवने। अथायं व्यासङ्गो हतपतितनिस्तारणविधौ न कस्मादुत्कर्षस्तव जननि जागर्ति जगति ॥ २१ ॥ नगेभ्यो यान्तीनां कथय तटिनीनां कतमया पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे। कया वा श्रीभर्तुः पदकमलमक्षालि सलिलैस्तुलालेशो यस्यां तव

जननि दीयेत कविभिः ॥ २२ ॥ विधत्तां निःशङ्कं निरवधि समाधिं विधिरहो सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः । कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः सवित्री कामानां यदि जगति जागर्ति भवती ॥ २३ ॥ अनाथः स्नेहार्द्रां विगलितगतिः पुण्यगतिदां पतन्विश्वोद्धर्त्रीं गदविगलितः सिद्धभिषजम् । सुधासिन्धुं तृष्णाकुलितहृदयो मातरमयं शिशुः संप्राप्तस्त्वामहमिह विदध्याः समुचितम् ॥ २४ ॥ विलीनो वै वैवस्वतनगरकोलाहलभरो गता दूता दूरं क्वचिदपि परेतान्मृगयितुम् । विमानानां व्रातो विदलयति वीथीर्दिविषदां कथा ते कल्याणी यदवधि महीमण्डलमगात् ॥२५॥ स्फुरत्कामक्रोधप्रबलतरसंजातजटिलज्वरज्वालाजालज्वलितवपुषां नः प्रतिदिनम् । हरन्तां संतापं कमपि मरुदुल्लासलहरीछटाश्चञ्चत्पाथः कणसरणयो दिव्यसरितः ॥ २६ ॥ इदं हि ब्रह्माण्डं सकलभुवनाभोगभवनं तरङ्गैर्यस्यान्तर्लुठति परितस्तिन्दुकमिव । स एष श्रीकण्ठप्रविततजटाजूटजटिलो जलानां संघातस्तव जननि तापं हरतु नः ॥ २७ ॥ त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः । इमं तं मामम्ब त्वमियमनुकम्पार्द्रहृदये पुनाना सर्वेषामघमथनदर्पं दलयसि ॥ २८ ॥ श्वपाकानां व्रातैरमितविचिकित्साविचलितैर्विमुक्तानामेकं किल सदनमेनःपरिषदाम् । अहो मामुद्धर्तुं जननि घटयन्त्याः परिकरं तव श्लाघां कर्तुं कथमिव समर्थो नरपशुः ॥ २९ ॥ न कोऽप्येतावन्तं खलु समयमारभ्य मिलितो यदुद्धारादाराद्भवति जगतो विस्मयभरः । इतीमामीहां ते मनसि चिरकालं स्थितवतीमयं संप्राप्तोऽहं सफलयितुमम्ब प्रणय नः ॥ ३० ॥ श्ववृत्तिव्यासङ्गो नियतमथ मिथ्याप्रलदनं कुतर्केष्वभ्यासः सततपरपैशुन्यमननम् । अपि श्रावं-

श्रावं मम तु पुनरेवं गुणगणानृते त्वत्को नाम क्षणमपि निरीक्षेत वदनम् ॥ ३१ ॥ विशालाभ्यामाभ्यां किमिह नयनाभ्या खलु फलं न याभ्यामालीढा परमरमणीया तव तनुः । अयं हि न्यक्कारो जननि मनुजस्य श्रवणयोर्ययोर्मातिर्यातिस्तव लहरिलीलाकलकलः ॥ ३२ ॥ विमानैः स्वच्छन्दं सुरपुरमयन्ते सुकृतिनः पतन्ति द्राक्पापा जननि नरकान्तः परवशाः । विभागोऽयं तस्मिन्नशुभमय-मूर्तौ जनपदे न यत्र त्वं लीलादलितमनुजाशेषकलुषा ॥ ३३ ॥ अपि घ्नन्तो विप्रानविरतमुशन्तो गुरुसतीः पिबन्तो मैरेयं पुनरप-हरन्तश्च कनकम् । विहाय त्वय्यन्ते तनुमतनुदानाध्वरजुषामु-पर्यम्ब क्रीडन्त्यखिलसुरसंभावितपदाः ॥ ३४ ॥ अलभ्यं सौरभ्यं हरति नियतं यः सुमनसां क्षणादेव प्राणानपि विरहशस्त्रक्षत-भृताम् । त्वदीयानां लीलाचलितलहरीणां व्यतिकरात् पुनीते सोऽपि द्रागहह पवमानस्त्रिभुवनम् ॥ ३५ ॥ कियन्तः सन्त्येके नियतमिह लोकार्थघटकाः परे पूतात्मानः कति च परलोकप्रणयिनः । सुखं शेते मातस्तव खलु कृपातः पुनरयं जगन्नाथः शश्वत्त्वयि निहित-लोकद्वयभरः ॥ ३६ ॥ भवत्या हि व्रात्याधमपतितया खण्डपरि-षत्परित्राणस्नेहः श्लथयितुमशक्यः खलु यथा । ममाप्येवं प्रेमा दुरितनिवहेष्वम्ब जगति स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः ॥ ३७ ॥ प्रदोषान्तर्नृत्यत्पुरमथनलीलोद्धृतजटातटाभोगप्रेङ्खल्लहरि-भुजसंतानविधुतिः । बिलक्रोडक्रीडज्जलडमरुडंकारसुभगस्तिरोधत्तां तापं त्रिदशतटिनीताण्डवविधिः ॥ ३८ ॥ सदैव त्वय्येवार्पितकुश-लचिन्ताभरमिमं यदि त्वं मामम्ब त्यजसि समयेऽस्मिन्सुविषमे । तदा विश्वासोऽयं त्रिभुवनतलादस्तमयते निराधारा चेयं भवति खलु निर्व्याजकरुणा ॥ ३९ ॥ कपर्दादुल्लस्य प्रणयमिलदर्धाङ्गयुवतेः

पुरारेः प्रेङ्खन्त्यो मृदुलतरसीमन्तसरणौ । भवान्या सापत्न्यस्फुरित-
नयनं कोमलरुचा करेणाक्षिप्तास्ते जननि विजयन्तां लहरयः ॥४०॥
प्रपद्यन्ते लोकाः कति न भवतीमत्रभवतीमुपाधिस्तत्रायं स्फुरति
यदभीष्टं वितरसि । शपे तुभ्यं मातर्मम तु पुनरात्मा सुरधुनि
स्वभावादेव त्वय्यमितमनुरागं विधृतवान् ॥ ४१ ॥ ललाटे या
लोकैरिह खलु सलीलं तिलकिता तमो हन्तुं धत्ते तरुणतरमार्तण्ड-
तुलनाम् । विलुम्पन्ती सद्यो विधिलिखितदुर्वर्णसरणिं त्वदीया
सन्मृत्स्ना मम हरतु कृत्स्नामपि शुचम् ॥ ४२ ॥ नरान्मूढांस्तत्त-
ज्जनपदसमासक्तमनसो हसन्तः सोल्लासं विकचकुसुमव्रातमिषतः ।
पुनानाः सौरभ्यैः सततमलिनो नित्यमलिनान्सखायो नः सन्तु
त्रिदशतटिनीतीरतरवः ॥ ४३ ॥ यजन्त्येके देवान्कठिनतरसेवांस्त-
दपरे वितानव्यासक्ता यमनियमरक्ताः कतिपये । अहं तु त्वन्नाम-
स्मरणभृतकामस्त्रिपथगे जगज्जालं जाने जननि तृणजालेन सदृशम्
॥ ४४ ॥ अविश्रान्तं जन्मावधि सुकृतजन्मार्जनकृतां सतां श्रेयः
कर्तुं कति न कृतिनः सन्ति विबुधाः । निरस्तालम्बानामकृतसुकृतानां
तु भवतीं विनामुष्मिँल्लोके न परमवलोके हितकरम् ॥ ४५ ॥
पयः पीत्वा मातस्तव सपदि यातः सहचरैर्विमूढैः संरन्तुं क्वचिदपि
न विश्रान्तिमगमम् । इदानीमुत्सङ्गे मृदुपवनसंचारशिशिरे चिरा-
दुन्निद्रं मां सदयहृदये शायय चिरम् ॥ ४६ ॥ बधान द्रागेव
द्रढिमरमणीयं परिकरं किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः ।
न कुर्यास्त्वं हेलामितरजनसाधारणतया जगन्नाथस्यायं सुरधुनि
समुद्धारसमयः ॥ ४७ ॥ शरच्चन्द्रश्वेतां शशिशकलश्वेतालमुकुटां
करैः कुम्भाम्भोजे वरभयनिरासौ च दधतीम् । सुधाधाराकाराभरण-
वसनां शुभ्रमकरस्थितां त्वां ये ध्यायन्त्युदयति न तेषां परि-

भवः ॥४८॥ दरस्मितसमुल्लसद्वदनकान्तिपूरामृतैर्भवज्वलनभर्जितान्निशमूर्जयन्ती नरान् । चिदेकमयचन्द्रिकाचयचमत्कृतिं तन्वती तनोतु मम शं तनोः सपदि शन्तनोरङ्गना ॥ ४९ ॥ मन्त्रैर्मीलितमौषधैर्विगलितं त्रस्तं सुराणां गणैः स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः । वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि त्वं तापं तिरयाधुना मम भवज्वालावलीढात्मनः ॥ ५० ॥ द्यूते नागेन्द्रकृत्तिप्रमथगणमणिश्रेणिनन्दीन्दुमुख्यं सर्वस्वं हारयित्वा स्वमथ पुरभिदि द्राक्पणीकर्तुकामे साकूतं हैमवत्या मृदुलहसितया वीक्षितायास्तवाम्ब व्यालोलोल्लासिवल्गल्लहरिनटघटीताण्डवं नः पुनातु ॥ ५१ ॥ विभूषितानङ्गरिपूत्तमाङ्गा सद्यः कृतानेकजनार्तिभङ्गा । मनोहरोत्तुङ्गचलत्तरङ्गा गङ्गा ममाङ्गान्यमलीकरोतु ॥ ५२ ॥ इमां पीयूषलहरीं जगन्नाथेन निर्मिताम् । यः पठेत्तस्य सर्वत्र जायन्ते सुखसंपदः ॥ ५३ ॥ इति पण्डितजगन्नाथविरचिता गङ्गालहरी संपूर्णा ॥

## ३७१. श्रीयमुनाष्टकम् ।

श्रीगणेशा नमः ॥ प्रणौमि यमुनामहं सकलसिद्धिहेतुं मुदा मुरारिपदपङ्कजस्स्फुरदमन्दरेणूत्कटाम् । तटस्थनवकाननप्रकटमोदपुष्पाम्बुना सुरासुरसुपूजितस्मरपितुः श्रियं बिभ्रतीम् ॥ १ ॥ कलिन्दगिरिमस्तके पतदमन्दपूरोज्ज्वला विलासगमनोल्लसत्प्रकटगण्डशैलोन्नता । सघोषगतिदन्तुरा समधिरूढदोलोत्तमा मुकुन्दरतिवर्धिनी जयति पद्मबन्धोः सुता ॥ २ ॥ भुवं भुवनपावनीमधिगतामनेकस्वनैः प्रियाभिरिव सेवितां शुकमयूरहंसादिभिः । तरङ्गभुजकङ्कणप्रकटमुक्तिकावालुकानितम्बतटसुन्दरीं नमत कृष्णचन्द्रप्रियाम् ॥ ३ ॥ अनन्तगुणभूषिते शिवविरिञ्चिदेवस्तुते घनाघननिभे सदा

ध्रुवपराशराभीष्टदे । विशुद्धमथुरातटे सकलगोपगोपीवृते कृपा-जलधिसंश्रिते मम मनः सुखं भावय ॥ ४ ॥ यया चरणपद्मजा मुररिपोः प्रियंभावुका समागमनतो भवेत्सकलसिद्धिदा सेवताम् । तया सदृशतामियात्कमलजासपत्नीव यद्धरिप्रियकलिन्दजा मनसि मे सदा स्थीयताम् ॥ ५ ॥ नमोऽस्तु यमुने सदा तव चरित्रम-त्यद्भुतं न जातु यमयातना भवति ते पयःपानतः । यमोऽपि भगिनीसुतान् कथमु हन्ति दुष्टानपि प्रियो भवति सेवनात्तव हरेर्यथा गोपिकाः ॥ ६ ॥ ममास्तु तव सन्निधौ तनुनवत्वमेतावता न दुर्लभतमा रतिर्मुररिपौ मुकुन्दप्रिये । अतोऽस्तु तव लालना सुरधुनी परं संगमात्तवैव भुवि कीर्तिता न तु कदापि पुष्टिस्थितैः ॥ ७ ॥ स्तुतिं तव करोति कः कमलजासपत्नि प्रिये हरेर्यदनुसेवया भवति सौख्यमामोक्षतः । इयं तव कथाधिका सकलगोपिकासंगमस्मर-श्रमजलाणुभिः सकलगात्रजैः संगमः ॥ ८ ॥ तवाष्टकमिदं मुदा पठति सूरकन्ये सदा समस्तदुरितक्षयो भवति वै मुकुन्दे रतिः । तथा सकलसिद्धयो मुररिपुश्च संतुष्यति स्वभावविजयो भवेद्वदति वल्लभः श्रीहरेः ॥ ९ ॥ इति श्रीवल्लभाचार्यविरचितं श्रीयमुनाष्ट-कस्तोत्रं संपूर्णम् ॥

## ३७२. गोदावर्यष्टकम् ।

श्रीगणेशाय नमः ॥ वेदांतवस्तुजनखेदासहं कलितगोदावपुर्वहति भेदाय संसृतिभियाम् । मोदागमप्रचुरकेदारमस्तमितभेदां दृशं भवतु भेदात्तमात्तकरुणम् । गोदा नयन्ति कलितोदावहाः शमल-मोदाय भंगजविनोदा यदीयपवनाः । भो दानवा व्रजत नो दारकं भवति वो दागमय्यतुलकोदारतत्तटजुषि ॥ १ ॥ स्नानाय वा त्वयि न पानाय याति हतमानादरः सुधुनि का नाम तस्य जननी ।

दानादिसत्कृतिवितानानि कानि भवहानाय चेत्त्वमसि मानातिग-स्वचरिते । धानासु वृष्टिरिव नानाविधानि शुभगानानि भावुक-निधानानि सन्तु मयि ते । ध्यानाध्वनि प्रणययानाय देहि मति-मानाय्य मह्यमयि जानासि कर्तुमुचितम् ॥ २ ॥ वारांनिधेर्गृहिणि मारान्तकादृतविहारां कथं स्ववनिहारायमानसलिलाम् । त्वां राध-यामि भवकारां गतः सुकृतभारार्चितां सततदारानुगोऽहमधमः । आरात्करिष्यसि कदारातिवेष्टितमगाराधिदैवतमपारावनव्रतधरे । धाराधरस्य किमु भाराय पल्वलमुदाराधिपे दिश विचाराय मोदम-तुलम् ॥ ३ ॥ माताऽसि तोकमयि मा तापयाशु कुरु शांताधि-मार्तसखि जातासि शर्वशिरसः । शातानि देहि जननान्तान् विना-शय कृतान्ताद्बिभेमि ननु मां तारयातिमलिनम् । त्वां तारिणीं विविधकांतारणिं कृतनितान्तार क नु विधाता विहाय शरणम् । वातायनेन किमु याता सुखं भुजगपार्श्वधरो विषविघाताद्दते मुनि-नुते ॥ ४ ॥ यामामनन्ति सरितामाद्यकां गिरिशमोदावहां प्रबलका-मादिषड्रिपुहराम् । तां चिन्तयामि हृदि रामाभिभूषिततटाऽऽविरस्तु मयि सा मान्यपूजितपदा । धामाविनश्वरमुदामादिशापनयदामानि मोहमयलामाकृतानि गलतः । श्यामां मतिं नय विरामाय याति बत यामादिभिर्विततिरामायुषो मम वृथा ॥ ५ ॥ बालाय किं प्रणतपालापि नार्पयसि शालामनल्पगुणजालां कृपामृतमयीम् । कालासिराग्रसति बालाग्रभागमपि शालागमं किमु करालाधिपस्त्य-जति माम् । भालाक्षराणि भवहालान्धकस्य पतितालापहत्रि शतधा लान्तु नाशमयि मे । व्यालायते सुखविशालाक्षवर्तनमरालानि नाशय मुधा लास्यकानि ललिते ॥ ६ ॥ या काचिदद्भुतगुणा कामधेनुरिव साकाङ्क्षमृग्यचरणा कामपूरणकरी । पाकाय कर्मज-

विपाकातुरायगुरुत्वाकादरं सुरपताका ददातु ननु सा। शाकाय जीव किमु हा कामनस्यमृतपाकादृते न भविताकालसर्पविजयः। पाकारिरारटति नाकाधिपोऽपि बत मा कापथे त्रिनट राकाजलां श्रय धुनीम् ॥ ७ ॥ देवास्तु दिव्यधुनि के वा भजद्बलहसेवाग्रहा जननि ते वारिबिन्दुपुरतः। हे वारिताखिलमले वायुजाधिपनुते वारणास्यनमिते वामनीकृतविधे। रेवादिसर्वफलदे वागतीतविभवे वारया- शुभमये वासयस्व निकटे। ते वा स्तवार्थमतये वासनां दधति ये वान्तवन्निखिलमेवाकलय्य तटगाः ॥ ८ ॥ इति गोदावर्यष्टकं संपूर्णम् ॥

## ३७३. काश्यष्टकम्।

श्रीगणेशाय नमः ॥ पापौघविध्वंसकरीं प्रसिद्धां श्रीजाह्नवीभूषितदिव्यरूपाम्। निर्वाणदात्रीं निखिलैकपूज्यां शिवप्रियां चैव नमामि काशीम् ॥ १ ॥ देवासुरैर्वन्दितपादपद्मां गायन्ति मुनयः सुयशश्च दिव्याम्। प्रसिद्धवेदेषु प्रभावयस्याः शिवप्रियां चैव नमामि काशीम् ॥ २ ॥ मुमुक्षूणां चैव शिवप्रदायिनीं वैकुण्ठश्रेणिं गुणमन्दिरां च। शिवालयां शोकविनाशिनीं च शिवप्रियां चैव नमामि काशीम् ॥ ३ ॥ विनाशशून्यां शिवरूपिणीं च मोहान्धकारस्य विनाशिनीं च। ब्रह्मात्मिकां कामप्रदायिनीं च शिवप्रियां वै प्रणमामि काशीम् ॥ ४ ॥ विशुद्धविज्ञानघनां चिदात्मिकां मोहाटवीं चैव दवाग्निभूताम्। शुद्धां सुशान्तां शिवभक्तिदायिनीं शिवप्रियां वै प्रणमामि काशीम् ॥ ५ ॥ भूतौघसंतापविनाशिनीं च लोकेश्वरैर्वन्दितदिव्यरूपाम्। महाव्रतां गर्भनिवासकृन्तनीं शिवप्रियां वै प्रणमामि काशीम् ॥ ६ ॥ विज्ञानदात्रीं प्रणवस्वरूपां चिन्तामणिं भक्तिप्रदां च नित्याम्। गोलोकदात्रीं भवभक्तिदात्रीं शिवप्रियां वै

प्रणमामि काशीम् ॥ ७ ॥ बुद्धेः परां शंकरप्राणवल्लभां मोहार्णवं कुम्भसमुद्भवां च । पापेभव्याघ्रीं हरलोकदात्रीं शिवप्रियां वै प्रणमामि काशीम् ॥ ८ ॥ प्रातः प्रातः समुत्थाय यः पठेत्प्रयतः पुमान् । अन्यदेशेऽपि भक्त्या स काशीवासफलं लभेत् ॥ ९ ॥ इति श्रीगोपालव्यासविरचितं काश्यष्टकं संपूर्णम् ॥

## ३७४. त्रिवेणीदशकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मुक्तामयालंकृतमुद्रवेणी भक्ताभयत्राणसुबद्ध-वेणी । मत्तालिगुञ्जन्मकरन्दवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥१॥ लोकत्रयैश्वर्यनिदानवेणी तापत्रयोच्चाटनबद्धवेणी । धर्मार्थकामाकल-नैकवेणी श्रीमत्प्रयागे० ॥२॥ मुक्ताङ्गनामोहनसिद्धवेणी भक्तान्तरा-नंदसुबोधवेणी । वृत्त्यन्तरोद्वेगविवेकवेणी श्रीमत्प्रयागे० ॥ ३ ॥ दुग्धोदधिस्फूर्जसुभद्रवेणी नीलाभ्रशोभाललिता च वेणी । स्वर्ण-प्रभाभासुरमध्यवेणी श्रीमत्प्रयागे० ॥ ४ ॥ विश्वेश्वरोत्तुङ्गकपर्दिवेणी विरञ्चिविष्णुप्रणतैकवेणी । त्रयी पुराणां सुरसार्थवेणी श्रीमत्प्रयागे० ॥ ५ ॥ माङ्गल्यसंपत्तिसमृद्धवेणी मात्रान्तरन्यस्तनिदानवेणी । परंपरापातकहारिवेणी श्रीमत्प्रयागे० ॥ ६ ॥ निमज्जदुन्मज्जमनुष्य-वेणी त्रयोदयोभाग्यविवेकवेणी । विमुक्तजन्माविभवैकवेणी श्रीमत्प्रयागे० ॥ ७ ॥ सौन्दर्यवेणी सुरसार्थवेणी माधुर्यवेणी महनीयवेणी । रत्नैकवेणी रमणीयवेणी श्रीमत्प्रयागे० ॥ ८ ॥ सारस्वताकारविधानवेणी कालिन्दकन्यामयलक्ष्यवेणी । भागीरथी-रूपमहेशवेणी श्रीमत्प्रयागे० ॥ ९ ॥ श्रीमद्भवानीभवनैक-वेणी लक्ष्मीसरस्वत्यभिमानवेणी । माता त्रिवेणीत्रयिरत्नवेणी श्रीमत्प्रयागे० ॥ १० ॥ त्रिवेणीदशकस्तोत्रं प्रातर्नित्यं पठेन्नरः ।

तस्य वेणी प्रसन्ना स्याद्विष्णुलोकं स गच्छति ॥ ११ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं त्रिवेणीदशकस्तोत्रं संपूर्णम् ॥

## ३७५. मुक्तिद्वारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सप्त पुर्यस्त्रयो ग्रामा नवारण्या नवोषराः । चतुर्दश सुगुह्यानि मुक्तिस्थानानि भूतले ॥ १ ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारावती चैव सप्तैता मुक्तिदायकाः ॥ २ ॥ शालग्रामो महामेरुः संभलो हरिमंदिरे । नंदिग्रामः कौसले तु त्रयो ग्रामाः प्रकीर्तिताः ॥ ३ ॥ दण्डकं सैन्धवारण्यं जम्बुमालं च पुष्करम् । उत्पलावर्तमारण्यं नैमिषं कुरुजाङ्गलम् ॥ ४ ॥ अर्बुदं हिमवन्तं च नवारण्यानि वै विदुः । रेणुका सूकरः काशी कालिकालवटेश्वराः ॥ ५ ॥ कालञ्जरो महाकाल ऊषरा नव कीर्तिताः । कोकाकुब्जार्बुदाश्चैव मणिकुण्डस्तथा वटः ॥ ६ ॥ शालग्रामं शूकरं च मथुरा च मम प्रिया । गया निष्क्रमणं चैव यत्र लोहार्गलो मम ॥ ७ ॥ प्रोतः स्वामी प्रभासं च बदरी मम चाश्रमः । द्विसप्तैतानि गुह्यानि मुक्तिस्थानानि भूतले ॥ ८ ॥ यानि तीर्थानि वाराहो जगाद धरणीं प्रति । तानि तीर्थानि विप्रर्षे तिष्ठन्ति नरविग्रहे ॥ ९ ॥ स्नानकाले सदा विद्वाँस्तानि तीर्थानि संस्मरेत् । तत्तत्स्मरणमात्रेण तत्तत्स्नानफलं लभेत् ॥ १० ॥ ब्रह्मरन्ध्रे स्थिताऽयोध्या सहस्रारं तु यद्विदुः । अष्टचक्रा नवद्वारा देवानां पूरयोध्यया ॥ ११ ॥ तस्यां हिरण्मयः कोश इत्येषा तैत्तिरी श्रुतिः । कर्मेन्द्रियाणि खलु पञ्च तथाऽपराणि ज्ञानेन्द्रियाणि मनआदिचतुष्टयं च ॥ १२ ॥ मथुराणां हतं चक्रं हृदये योगिनो विदुः । यत्र वीरोऽभवत्कृष्णः सर्वलोकैकपालकः ॥ १३ ॥ मूला-

धारेऽभवन्माया सर्वाधारमयी यतः । आज्ञाचक्रं स्मृता काशी जाबालश्रुतिमालिनी ॥ १४ ॥ स्वाधिष्ठानं स्मृता कान्ती मणिपूरमवन्तिका । विशुद्धं द्वारका प्रोक्ता सप्तपुर्यो यथाक्रमात् ॥ १५ ॥ आकण्ठात् पादपर्यन्तं शालग्रामः प्रकीर्तितः । आकण्ठात् कटिपर्यन्तं प्रोच्यते हरिमन्दिरम् ॥ १६ ॥ आशिरः कण्ठपर्यन्तं नन्दिग्रामं विदुर्बुधाः । उपस्थे यानि लोमानि तानि दण्डक उच्यते ॥ १७ ॥ श्मश्रूणि सैन्धवारण्यं प्रोच्यते मुनिपुङ्गवैः । चिबुके यानि लोमानि जम्बुमालं हि तद्विदुः ॥ १८ ॥ हृदये यानि लोमानि तानि पुष्करमुच्यते । दक्षिणे भ्रूलता बाहू उत्पलावर्तकाननम् ॥ १९ ॥ उत्तरे नैमिषारण्यं विदुर्भ्रूवल्लरीं बुधाः । कुरुक्षेत्रं मुनिप्रोक्तं दक्षिणस्तनमण्डलम् ॥ २० ॥ अर्बुदं च स्तनं वामं कथितं तत्त्ववादिभिः । तत्कुक्षौ हिमवन्तं च सर्वैर्वृद्धैश्च उच्यते ॥ २१ ॥ नवारण्यानि चैतानि शरीरे सन्ति देहिनाम् । रेणुका कण्ठकूपस्था नासिकायां तु सूकरम् । भ्रुवोर्मध्ये स्थिता काशी तदेवानंदकाननम् ॥ २२ ॥ भ्रुवोर्घ्राणस्य यः संधिरित्येषा शाश्वती श्रुतिः । वामपाणितले काली कालेश्वरस्तथोत्तरे ॥ २३ ॥ वटेशो पादयोस्तद्वत्तलदेशे प्रकीर्त्यते । कालञ्जरो ललाटे स्यात् साक्षाच्छम्भोर्निकेतनम् ॥ २४ ॥ नाभिदेशे महाकालस्तन्नाम्ना यत्र वै हरः । नाभिदेशे सदा विद्वाँश्चिन्त्यते मोक्षकांक्षिभिः ॥ २५ ॥ सव्यनासापुटं कोकागुदं कुञ्जाचलः स्मृतः । दक्षिणेतरकक्षायां प्रोक्तः स ह्यर्बुदाचलः ॥ २६ ॥ राजदन्तबिलं तद्वत्प्रोच्यते मणिकर्णिका । प्रयागो नासिकाग्रे तु स एव वट उच्यते ॥ २७ ॥ केषांचिद्वामपादाब्धौ न तु तत्त्वविदां मतम् । इडाभागस्थिता गङ्गा पिङ्गला यमुना नदी ॥ २८ ॥ तयोर्मध्ये गता नाडी सुषुम्नाख्या सरस्वती । तासां योगे प्रयागः

स्यादिति तत्त्वविदो विदुः ॥ २९ ॥ शालग्रामं तु पादाग्रे सूकरं दक्षनासिका । पुरीतन्मथुरा प्रोक्ता यत्र शेते हरिः स्वयम् ॥ ३० ॥ मुक्तौ प्रोक्तं गयाक्षेत्रं लिङ्गं निष्क्रमणं स्मृतम् । लोहार्गलो दन्तपंक्ती रसना प्रोतनायकः ॥ ३१ ॥ जङ्घसंधिर्हनु ग्रीवा प्रभासं तत्प्रचक्षते । ब्रह्मस्वं बदरी प्रोक्तं नृदेहे मुनिसत्तम ॥ ३२ ॥ एतेषां स्मृतिमात्रेण सर्वं स्नानफलं लभेत् । एतद्गुह्यं मया प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३३ ॥ क्षमातीर्थं तपस्तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदया तीर्थं ध्यानतीर्थं च उच्यते ॥ ३४ ॥ एतानि सर्वतीर्थानि सप्तमध्यानि देहिनाम् । वसन्ति सर्वतीर्थेषु तत्र स्नानं समाचरेत् ॥ ३५ ॥ इति श्रीस्कन्दपुराणे मुक्तिद्वारस्तोत्रं संपूर्णम् ॥

## ३७६. यमुनाष्टकम् ।

श्रीगणेशाय नमः ॥ व्रजाधिराजनन्दनांबुदाभगात्रचन्दनानुलेपगन्धवाहिनीं भवाब्धिबीजदाहिनीम् । जगत्त्रये यशस्विनीं लसत्सुधीपयस्विनीं भजे कलिन्दनन्दिनीं दुरन्तमोहभंजनीम् ॥ १ ॥ रसैकसीमराधिकापदाब्जभक्तसाधिकां तदङ्गरागपिञ्जरप्रभातपुञ्जमंजुलाम् । स्वरोचिषातिमंजुलां कृताजनाधिगंजनां भजे० ॥ २ ॥ व्रजेन्द्रसूनुराधिकाहृदि प्रपूर्णमानयोर्महारसाब्धिपूरयोरिवातितीव्रवेगतः । बहिः समुच्छलन्नवप्रवाहरूपिणीमहं भजे० ॥ ३ ॥ विचित्ररत्नबद्धसत्तटद्वयश्रियोज्ज्वलां विचित्रहंससारसाद्यनन्तपक्षिसंकुलाम् । विचित्रहैममेखलां कृतातिदीनपालनां भजे० ॥ ४ ॥ अवन्तिकाप्रियां हरेर्महाकृपास्वरूपिणीं विशुद्धभक्तिमुज्ज्वलां परे रसात्मिकां विदुः । सुधास्तुतिं त्वलौकिकीं परेशवर्णरूपिणीं भजे० ॥ ५ ॥ सुरेन्द्रवृन्दवन्द्यया रसादधिष्ठिते वने सदोपलब्धिमाधवाद्भुतैकसद्रसोन्मदाम् । अतीवविह्वलामिवोच्छलत्तरङ्गदोर्लतां

भजे० ॥ ६ ॥ प्रफुल्लपङ्कजाननां लसन्नवोत्पलेक्षणां रथाङ्गनामयुग्मस्तनीमुदारहंसकाम् । नितम्बचारुरोधसं हरेः प्रियां रसोज्ज्वलां भजे० ॥ ७ ॥ समस्तवेदमस्तकैरगम्यवैभवां सदा महामुनीन्द्रनारदादिभिः सदैव भाविताम् । अतुल्यपामरैरपि श्रितां पुमर्थसारदां भजे० ॥ ८ ॥ य एतदष्टकं बुधस्त्रिकालमादितः पठेत् कलिन्दनन्दिनीं हृदा विचिन्त्य विश्ववन्दिताम् । इहैव राधिकापतेः पदाब्जभक्तिमुत्तमामवाप्य स ध्रुवं भवेत्परत्र तुष्टयानुगः ॥ ९ ॥ इति श्रीगोस्वामिविरचितं यमुनाष्टकं संपूर्णम् ॥

## ३७७. श्रीयमुनाष्टकम् ।

श्रीगणेशाय नमः ॥ मातर्देवि कलिन्दभूधरसुते नीलांबुजश्यामलस्निग्धोद्यद्विमलोर्मिताण्डवधरे तुभ्यं नमस्कुर्महे । त्वं तुर्याऽप्यसि यत्प्रिया मुररिपोस्तद्बाल्यतारुण्ययोर्लीलानामवधायिकान्यमहिषीवृंदेषु वंद्याधिकम् ॥ १ ॥ लोकान्यान्कलिकालकीलितमहादुष्कर्मकूटांकितान् नेनिक्ते दिवमुत्पतिष्यति हि सा गीर्वाणकूलंकषा । तन्मातस्त्वयि संसृतिप्रसृमरक्लेशाभिभूतं मनः स्वर्निःश्रेणिमुपेतुमर्कतनये श्रद्धां निबध्नाति नः ॥ २ ॥ सोन्नादं निपतन् कलिन्दशिखरिप्रोत्तुङ्गश्रृङ्गांतराद्गच्छन् प्राच्यमपां निधिं जननि सद्वारां प्रवाहस्तव । मध्येमार्गमवाप्तभूरिविषयाँस्तत्कालमुन्मार्जयन् दिश्यान्नः श्रियमुद्धुरां मरकतश्यामाभिरामद्युतिः ॥ ३ ॥ शय्योत्थायमजस्रमात्मसदनात्त्वां वीक्ष्य लक्ष्यां क्षणान्मातः प्रातरपोहयामि विततं दुष्पातकव्रातकम् । संघीभूय समूलकाषमखिलं संकृष्य सत्कर्मणां काण्डं द्रागपवर्गगमने येनार्गलीभूयते ॥ ४ ॥ नावासं द्युसदां न पन्नगपुरं नान्याश्च भोगस्थलीः श्लाघेऽहं परमत्र किं तु विपुला श्रीभारतीया भुवः । स्वेच्छाधावदुदग्रदुष्कलिकरिक्रीडाकृपाणायिता

यास्त्वेतास्तव वारिणां रविसुते चञ्चन्ति वीचिच्छटाः ॥ ५ ॥ त्वत्कूले निवसन् वसन्नवृजिनव्यूहोऽभिषुण्वन्मुहुः पायंपायमपायवारि मधुरं वारि ग्रहेशात्मजे । दूरीकृत्य ऋणत्रयं सफलययञ्जन्मात्मनो निर्भरानन्दास्वादनतत्परो गमयिता कालं कदाऽयं जनः ॥ ६ ॥ नो तत्त्वावगमस्पृहा न विपुलायासः सतां संगतौ नो तत्तन्निगमागमोक्तविविधानुष्ठाननिष्ठापि च । येषां तेऽपि जनाः पतंगतनये भित्त्वा पितुर्मण्डलं सोदर्यं त्ववधीर्य ते सुकृतिनो ब्रह्मात्मतां बिभ्रति ॥ ७ ॥ वक्तुं ते महिमानमस्मि न विभुर्लोके विकुण्ठेऽप्यलं कंसारातिकुटुम्बिनि प्रकटयत्प्रीतिं परं कुण्ठिताम् । यद्वेदैरपि मृग्यमाणमनिशं तद्ब्रह्म मातर्यतस्त्वत्कूलस्थनिकुंजुमंजुवलयक्रोडेषु विक्रीडति ॥ ८ ॥ तैलिङ्गभूत्रिदशमण्डलमण्डनस्य पुर्या मधोर्निवसतोऽत्र रमेशसूरेः । तिष्ठन् कदाऽपि कुतुकात्तट एव तस्याः सनुर्व्यधात्स्तवमिमं तरणेः सुतायाः ॥ ९ ॥ इति रमेशसूरिसूनुविरचितं यमुनाष्टकं संपूर्णम् ॥

## ३७८. अमृतलहरी ।

श्रीगणेशाय नमः ॥ मातः पातकपातकारिणि तव प्रातः प्रयातस्तटं यः कालिन्दि महेन्द्रनीलपटलस्निग्धां तनुं वीक्षते । तस्यारोहति किं न धन्यजनुषः स्वान्तं नितान्तोल्लसन्नीलाम्भोधरवृन्दवन्दितरुचिर्देवो रमावल्लभः ॥ १ ॥ नित्यं पातकभङ्गमङ्गलजुषां श्रीकण्ठकण्ठत्विषां तोयानां यमुने तव स्तवविधौ को याति वाचालताम् । येषु द्राग्विनिमज्ज्य सज्जतितरां रम्भाकराम्भोरुहस्फूर्जच्चामरवीजितामरपदं जेतुं वराको नरः ॥ २ ॥ दानान्धीकृतगन्धसिन्धुरघटागण्डप्रणालीमिलद्भृङ्गालीमुखरीकृताय नृपतिद्वाराय बद्धोऽञ्जलिः । त्वत्कूले फलमूलशालिनि मम श्लाघ्यामुरीकुर्वतो वृत्तिं हन्त मुनेः

प्रयान्तु यमुने वीतज्वरा वासराः ॥ ३ ॥ अन्तर्मौक्तिकपुञ्जमञ्जिम बहिः स्निग्धेन्द्रनीलप्रभं मातर्मे मुदमातनोतु करुणावत्या भवत्याः पयः । यद्रूपद्वयधारणादिव नृणामा चूडमामज्जतां तत्कालं तनुतेतरां हरिहराकारामुदारां तनुम् ॥ ४ ॥ तावत्पापकदम्बडम्बरमिदं तावत्कृतान्ताद्भयं तावन्मानसपद्मसद्मनि भवभ्रान्तेर्महानुत्सवः । यावल्लोचनयोः प्रयाति न मनागम्भोजिनीबन्धुजे नृत्यत्तुङ्गतरङ्गभङ्गिरुचिरो वारां प्रवाहस्तव ॥ ५ ॥ कालिन्दीति कदापि कौतुकवशात्त्वन्नामवर्णानिमान् व्यस्तानालपतां नृणां यदि करे खेलन्ति संसिद्धयः । अन्तर्ध्वान्तकुलान्तकारिणि तव क्षिप्तामृते वारिणि स्नातानां पुनरन्वहं स महिमा केनाधुना वर्ण्यते ॥ ६ ॥ स्वर्णस्तेयपरानपेयरसिकान्पाथःकणास्ते यदि ब्रह्मघ्नान्गुरुतल्पगानपि परित्रातुं गृहीतव्रताः । प्रायश्चित्तकुलैरलं तदधुना मातः परेताधिपप्रौढाहंकृतिहारिहुंकृतिमुचामग्रे तव स्रोतसाम् ॥ ७ ॥ पायं पायमपायहारि जननि स्वादु त्वदीयं पयो नायं नायमनायनीमकृतिनां मूर्तिं दृशोः कैशवीम् । स्मारं स्मारमपारपुण्यविभवं कृष्णेति वर्णद्वयं चारं चारमितस्ततस्तव तटे मुक्तो भवेयं कदा ॥ ८ ॥ मातर्वारिणि पापहारिणि तव प्राणप्रयाणोत्सवं संप्राप्तेन कृतां नरेण सहतेऽवज्ञां कृतान्तोऽपि यत् । यद्वा मण्डलभेदनादुदयिनीश्चण्डद्युतिर्वेदनाश्चित्रं तत्र किमप्रमेयमहिमा प्रेमा यदौत्पत्तिकः ॥ ९ ॥ संज्ञाकान्तसुते कृतान्तभगिनि श्रीकृष्णनित्यप्रिये पापोन्मूलिनि पुण्यधात्रि यमुने कालिन्दि तुभ्यं नमः । एवं स्नानविधौ पठन्ति खलु ये नित्यं गृहीतव्रतास्तानामश्रितसंख्यजन्मजनितं पापं क्षणादुज्झति ॥ १० ॥ अयं पण्डितराजेन श्रीजगन्नाथशर्मणा । स्तवः कलिन्दनन्दिन्या निर्मलो निरमीयत ॥ ११ ॥ इति पण्डितराजश्रीजगन्नाथकृतामृतलहरी संपूर्णा ॥

# वेदांतस्तोत्राणि ।

## ३७९. आत्मपंचकम् ।

श्रीगणेशाय नमः ॥ नाहं देहो नेंद्रियाण्यंतरंगं नाहंकारः प्राणवर्गो न बुद्धिः । दारापत्यक्षेत्रवित्तादिदूरः साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् ॥ १ ॥ रज्ज्वज्ञानाद्भाति रज्जुर्यथाऽहिः स्वात्माज्ञानादात्मनो जीवभावः । आप्तोक्त्याऽहिभ्रांतिनाशे स रज्जुर्जीवो नाहं देशिकोक्त्या शिवोऽहम् ॥ २ ॥ आभातीदं विश्वमात्मन्यसत्यं सत्यज्ञानानंदरूपे विमोहात् । निद्रामोहात्स्वप्नवत्तन्न सत्यं शुद्धः पूर्णो नित्य एकः शिवोऽहम् ॥ ३ ॥ मत्तो नान्यत्किंचिदत्रास्ति विश्वं सत्यं बाह्यं वस्तु मायोपक्लृप्तम् । आदर्शांतर्भासमानस्य तुल्यं मय्यद्वैते भाति तस्माच्छिवोऽहम् ॥ ४ ॥ नाहं जातो न प्रवृद्धो न नष्टो देहस्योक्ताः प्राकृताः सर्वधर्माः । कर्तृत्वादिश्चिन्मयस्यास्ति नाहंकारस्यैव ह्यात्मनो मे शिवोऽहम् ॥ ५ ॥ नाहं जातो जन्ममृत्यू कुतो मे नाहं प्राणः क्षुत्पिपासे कुतो मे । नाहं चित्तं शोकमोहौ कुतो मे नाहं कर्ता बंधमोक्षौ कुतो मे ॥ ६ ॥ इति श्रीमच्छंकराचार्यविरचितमात्मपंचकस्तोत्रं संपूर्णम् ॥

## ३८०. वैराग्यपंचकम् ।

श्रीगणेशाय नमः ॥ शिलं किमनलं भवेदनलमौदरं बाधितुं पयः प्रसृतिपूरकं किमु न धारकं सारसम् । अयत्नमलमल्पकं पथि पटच्चरं कच्चरं भजंति विबुधा मुधा अहह कुक्षितः कुक्षितः ॥ १ ॥ दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमंजलिः । यदंजनाभं निरपायमस्ति नो धनंजयस्यंदनभूषणं धनम् ॥ २ ॥ काचाय नीचं कमनीयवाचा मोचाफलस्वादमुचा न याचे । दयाकुचेले धनदत्कुचेले स्थिते कुचेले श्रितमा-

कुचेले ॥ ३ ॥ क्षोणीकोणशतांशपालनखलदुर्वारवर्गानलक्षुभ्यत्क्षुद्र-नरेंद्रचाटुरचनां धन्यां न मन्यामहे । देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा धानामुष्टिमुचे कुचेलमुनये धत्ते स्म वित्तेशताम् ॥ ४ ॥ शरीरपतनावधि प्रभुनिषेवणापादनादबिंधन-धनंजयप्रशमदं धनं दंधनम् । धनंजयविवर्धनं धनमुदूढगोवर्धनं सुसाधनमबाधनं सुमनसां समाराधनम् ॥ ५ ॥ इति श्रीसर्वतंत्र-स्वतंत्रवेदांताचार्यकृतं वैराग्यपंचकं संपूर्णम् ॥

## ३८१. धन्याष्टकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ तज्ज्ञानं प्रशमकरं यदिंद्रियाणां तज्ज्ञेयं यदुपनिषत्सु निश्चितार्थम् । ते धन्या भुवि परमार्थनिश्चितेहाः शेषास्तु भ्रमनिलये परिभ्रमंति ॥ १ ॥ आदौ विजित्य विषयान्मदमोहराग-द्वेषादिशत्रुगणमाहृतयोगराज्याः । ज्ञात्वाऽमृतं समनुभूय परात्म-विद्याकान्तासुखा वनगृहे विचरंति धन्याः ॥ २ ॥ त्यक्त्वा गृहे रतिमधोगतिहेतुभूतामात्मेच्छयोपनिषदर्थरसं पिबंतः । वीतस्पृहा विषयभोगपदे विरक्ता धन्याश्चरंति विजनेषु विरक्तसंगाः ॥ ३ ॥ त्यक्त्वा ममाहमिति बंधकरे पदे द्वे मानावमानसदृशाः समदर्शि-नश्च । कर्तारमन्यमवगम्य तदर्पितानि कुर्वंति कर्मपरिपाकफलानि धन्याः ॥ ४ ॥ त्यक्त्वेषणात्रयमवेक्षितमोक्षमार्गा भैक्ष्यामृतेन परिकल्पितदेहयात्राः । ज्योतिः परात्परतरं परमात्मसंज्ञं धन्या द्विजा रहसि हृद्यवलोकयंति ॥ ५ ॥ नासन्न सन्न सदसन्न महन्न चाणु न स्त्री पुमान्न च नपुंसकमेकबीजम् । यैर्ब्रह्म तत्समनुपासित-मेकचित्तैर्धन्या विरेजुरितरे भवपाशबद्धाः ॥ ६ ॥ अज्ञानपंक-परिमग्नमपेतसारं दुःखालयं मरणजन्मजरावसक्तम् । संसारबंधन-मनित्यमवेक्ष्य धन्या ज्ञानासिना तदवशीर्य विनिश्चयंति ॥ ७ ॥

शान्तैरनन्यमतिभिर्मधुरस्वभावैरेकत्वनिश्चितमनोभिरपेतमोहैः । साकं वनेषु विजितात्मपदस्वरूपं तद्वस्तु सम्यगनिशं विमृशंति धन्याः ॥ ८ ॥ अहिमिव जनयोगं सर्वदा वर्जयेद्यः कुणपमिव सुनारीं त्यक्तकामो विरागी । विषमिव विषयान् यो मन्यमानो दुरंतान् जयति परमहंसो मुक्तिभावं समेति ॥ ९ ॥ संपूर्णं जगदेव नंदनवनं सर्वेऽपि कल्पद्रुमा गांगं वारि समस्तवारिनिवहः पुण्याः समस्ताः क्रियाः । वाचः प्राकृतसंस्कृताः श्रुतिशिरो वाराणसी मेदिनी सर्वावस्थितिरस्य वस्तुविषया दृष्टे परब्रह्मणि ॥ १० ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं धन्याष्टकस्तोत्रं संपूर्णम् ॥

## ३८२. विज्ञाननौका ।

श्रीगणेशाय नमः ॥ तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तो नृपादौ पदे तुच्छबुद्ध्या । परित्यज्य सर्वं यदाप्नोति तत्त्वं परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १ ॥ दयालुं गुरुं ब्रह्मनिष्ठं प्रशांतं समाराध्य मत्या विचार्य स्वरूपम् । यदाप्नोति तत्त्वं निदिध्यास्य विद्वान्परं ब्रह्म० ॥ २ ॥ यदानंदरूपं प्रकाशस्वरूपं निरस्तप्रपंचं परिच्छेदशून्यम् । अहं-ब्रह्मवृत्त्यैकगम्यं तुरीयं परं ब्रह्म० ॥ ३ ॥ यदज्ञानतो भाति विश्वं समस्तं विनष्टं च सद्यो यदात्मप्रबोधे । मनोवागतीतं विशुद्धं विमुक्तं परं ब्रह्म० ॥ ४ ॥ निषेधे कृते नेतिनेतीति वाक्यैः समाधिस्थितानां यदाभाति पूर्णम् । अवस्थात्रयातीतमेकं तुरीयं परं ब्रह्म० ॥ ५ ॥ यदानंदलेशैः समानंदि विश्वं यदाभाति सत्त्वे तदाभाति सर्वम् । यदालोचने रूपमन्यत्समस्तं परं ब्रह्म० ॥ ६ ॥ अनंतं विभुं सर्वयोनिं निरीहं शिवं संगहीनं यदोंकारगम्यम् । निराकारमत्युज्ज्वलं मृत्युहीनं परं ब्रह्म० ॥ ७ ॥ यदानंदसिंधौ

निमग्नः पुमान्स्यादविद्याविलासः समस्तप्रपंचः । यदा न स्फुरत्यद्भुतं यन्निमित्तं परं ब्रह्म० ॥ ८ ॥ स्वरूपानुसंधानरूपां स्तुतिं यः पठेदादराद्भक्तिभावो मनुष्यः । शृणोतीह वा नित्यमुद्युक्तचित्तो भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥ ९ ॥ विज्ञाननावं परिगृह्य कश्चित्त-रेद्यदज्ञानमयं भवाब्धिम् । ज्ञानासिना यो हि विच्छिद्य तृष्णां विष्णोः पदं याति स एव धन्यः ॥ १० ॥ इति श्रीमच्छंकराचार्य-विरचिता विज्ञाननौका संपूर्णा ॥

## ३८३. मोहमुद्गरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम् । यल्लभसे निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥ १ ॥ अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् । पुत्रादपि धनभाजां भीतिः सर्वत्रैषा कथिता नीतिः ॥ २ ॥ मा कुरु जनधनयौवनगर्वं हरति निमेषात्कालः सर्वम् । मायामय-मिदमखिलं हित्वा ब्रह्मपदं त्वं प्रविशाशु विदित्वा ॥ ३ ॥ नलिनीदलगतजलवत्तरलं तद्वज्जीवनमतिशयचपलम् । क्षणमपि सज्जनसंगतिरेका भवति भवार्णवतरणे नौका ॥ ४ ॥ यावज्जननं तावन्मरणं तावज्जननी जठरे शयनम् । इति संसारे स्फुटतरदोषे कथमिव मानव तव संतोषः ॥ ५ ॥ कामं क्रोधं मोहं लोभं त्यक्त्वात्मानं भावय कोऽहम् । आत्मज्ञानविहीना मूढास्ते पच्यंते नरकनिगूढाः ॥ ६ ॥ सुरमंदिरतरुमूलनिवासः शय्या भूतलमजिनं वासः । सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥ ७ ॥ शत्रौ मित्रे पुत्रे बंधौ मा कुरु यत्नं विग्रहसंधौ । भव समचित्तः सर्वत्र त्वं वांछस्यचिराद्यदि विष्णुत्वम् ॥ ८ ॥ त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि सर्वसहिष्णुः । सर्वस्मिन्नपि पश्या-

त्मानं सर्वत्रोत्सृज भेदाज्ञानम् ॥ ९ ॥ प्राणायामं प्रत्याहारं नित्यानित्यविवेकविचारम् । जाप्यसमेतसमाधिविधानं कुर्ववधानं महदवधानम् ॥ १० ॥ अष्टकुलाचलसप्तसमुद्राः ब्रह्मपुरंदरदिनकररुद्राः । न त्वं नाहं नायं लोकस्तदपि किमर्थं क्रियते शोकः ॥ ११ ॥ सुखतः क्रियते रामाभोगः पश्चाद्धन्त शरीरे रोगः । यद्यपि लोके मरणं शरणं तदपि न मुञ्चति पापाचरणम् ॥ १२ ॥ यावज्जीवो निवसति देहे कुशलं तावत्पृच्छति देहे । गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये ॥ १३ ॥ नलिनीदलगतजलवत्तरलं तद्वज्जीवनमतिशयचपलम् । विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम् ॥ १४ ॥ का तेऽष्टादशदेशे चिंता वातुल तव किं नास्ति नियंता । यस्त्वां हस्ते सुदृढनिबद्धं बोधयति प्रभवादिविरुद्धम् ॥ १५ ॥ गुरुचरणांबुजनिर्भरभक्तः संसारादचिराद्भवमुक्तः । सेंद्रियमानसनियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम् ॥ १६ ॥ इति श्रीमच्छंकराचार्यविरचितं मोहमुद्गरस्तोत्रं संपूर्णम् ॥

## ३८४. चर्पटपंजरिकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ दिनमपि रजनी सायं प्रातः शिशिरवसंतौ पुनरायातः । कालः क्रीडति गच्छत्यायुस्तदपि न मुंचत्याशावायुः ॥ १ ॥ भज गोविंदं भज गोविंदं भज गोविंदं मूढमते । प्राप्ते सन्निहिते मरणे नहि नहि रक्षति डुकृञ्करणे (ध्रुवपदम्) । अग्रे वह्निः पृष्ठे भानू रात्रौ चुबुकसमर्पितजानुः । करतलभिक्षा तरुतलवासस्तदपि न मुंचत्याशापाशः । भज गोविंदं० ॥ २ ॥ यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः । पश्चाद्धावति जर्जरदेहे वार्तां पृच्छति कोऽपि न गेहे । भज गोविंदं भज० ॥ ३ ॥ जटिलो मुंडी लुंचितकेशः काषायांबरबहुकृतवेषः । पश्यन्नपि च न पश्यति मूढ

उदरनिमित्तं बहुकृतवेषः । भज गोविंदं० ॥ ४ ॥ भगवद्गीता किंचिदधीता गंगाजललवकणिका पीता । सकृदपि यस्य मुरारिसमर्चा तस्य यमः किं कुरुते चर्चा । भज गोविंदं भज० ॥ ५ ॥ अंगं गलितं पलितं मुंडं दशनविहीनं जातं तुंडम् । वृद्धो याति गृहीत्वा दंडं तदपि न मुंचत्याशापिंडम् । भज गोविंदं० ॥ ६ ॥ बालस्तावत्क्रीडासक्तस्तरुणस्तावत्तरुणीरक्तः । वृद्धस्तावच्चिंतामग्नः परे ब्रह्मणि कोऽपि न लग्नः । भज गोविंदं० ॥ ७ ॥ पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् । इह संसारे खलु दुस्तारे कृपयाऽपारे पाहि मुरारे । भज गोविंदं० ॥ ८ ॥ पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपि मासः । पुनरप्ययनं पुनरपि वर्षं तदपि न मुंचत्याशामर्षम् । भज गोविंदं भज० ॥ ९ ॥ वयसि गते कः कामविकारः शुष्के नीरे कः कासारः । क्षीणे वित्ते कः परिवारो ज्ञाते तत्त्वे कः संसारः । भज गोविंदं भज० ॥ १० ॥ नारीस्तनभरजघननिवेशं दृष्ट्वा मिथ्यामोहावेशम् । एतन्मांसवसादिविकारं मनसि विचारय वारंवारम् । भज गोविंदं भज गो० ॥ ११ ॥ कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः । इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम् । भज गोविंदं भज० ॥ १२ ॥ गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रम् । नेयं सज्जनसंगे चित्तं देयं दीनजनाय च वित्तम् । भज गोविंदं० ॥ १३ ॥ यावज्जीवो निवसति देहे कुशलं तावत्पृच्छति गेहे । गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये । भज गोविंदं भज० ॥ १४ ॥ सुखतः क्रियते रामाभोगः पश्चाद्धंत शरीरे रोगः । यद्यपि लोके मरणं शरणं तदपि न

मुंचति पापाचरणम् । भज गोविंदं भज० ॥ १५ ॥ रथ्याचर्पट-विरचितकंथः पुण्यापुण्यविवर्जितपंथः । नाहं न त्वं नायं लोकस्तदपि किमर्थं क्रियते शोकः । भज गोविंदं भज० ॥ १६ ॥ कुरुते गंगासागरगमनं व्रतपरिपालनमथवा दानम् । ज्ञानविहीने सर्वमनेन मुक्तिर्न भवति जन्मशतेन । भज गोविंदं भज० ॥ १७ ॥ इति श्रीमच्छंकराचार्यविरचितं चर्पटपंजरिकास्तोत्रं संपूर्णम् ॥

## ३८५. वाक्यसुधास्तोत्रम् ।

श्रीगणेशाय नमः ॥ रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक्तु मानसम् । दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते ॥ १ ॥ नीलपीत-स्थूलसूक्ष्मह्रस्वदीर्घादिभेदतः । नानाविधानि रूपाणि पश्येल्लोचन-मेकधा ॥ २ ॥ आन्ध्यमान्द्यपटुत्वेषु नेत्रधर्मेषु चैकधा । सङ्कल्प-येन्मनःश्रोत्रत्वगादौ योज्यतामिदम् ॥ ३ ॥ कामसंकल्पसंदेहाः श्रद्धाश्रद्धे धृतीतरे । ह्रीर्धीर्भीरित्येवमादीन्भासयत्येकधा चितिः ॥ ४ ॥ नोदेति नास्तमायाति न वृद्धिं याति न क्षयम् । स्वयं विभात्यथान्यानि भासयेत्साधनं विना ॥ ५ ॥ चिच्छायावेशतो बुद्धौ भानं धीस्तु द्विधा स्थिता । एकाऽहंकृतिरन्या स्यादन्तःकरण-रूपिणी ॥ ६ ॥ छायाऽहंकारयोरैक्यं तप्तायःपिण्डवन्मतम् । तद-हंकारतादात्म्याद्देहश्चेतनतामियात् ॥ ७ ॥ अहंकारस्य तादात्म्यं चिच्छायादेहसाक्षिभिः । सहजं कर्मजं भ्रांतिजन्यं च त्रिविधं क्रमात् ॥ ८ ॥ संबन्धिनो सतोर्नास्ति निवृत्तिः सहजस्य तु । कर्म-क्षयात्प्रबोधाच्च निवर्तेते क्रमादुभे ॥ ९ ॥ अहंकारलये सुप्तौ भवे-द्देहोऽप्यचेतनः । अहंकृतिविकासोऽर्धः स्वप्नः सर्वस्तु जागरः ॥ १० ॥ अन्तःकरणवृत्तिश्च चितिच्छायैक्यमागता । वासनां कल्प-येत्स्वप्ने बोधे तु विषयान्बहिः ॥ ११ ॥ मनोऽहंकृत्युपादानं लिङ्ग-

मेकं जडात्मकम् । अवस्थात्रयमन्वेति जायते म्रियते तथा ॥ १२ ॥
शक्तिद्वयं हि मायाया विक्षेपावृत्तिरूपकम् । विक्षेपशक्तिर्लिङ्गादि-
ब्रह्माण्डान्तं सृजेद्बहिः ॥ १३ ॥ सृष्टिर्नाम ब्रह्मरूपे सच्चिदानन्द-
वस्तुनि । अब्धौ फेनादिवत्सर्वं नामरूपप्रसारणा ॥ १४ ॥ अन्तर्दृ-
ग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः । आवृणोत्यपरा शक्तिः सा संसा-
रस्य कारणम् ॥ १५ ॥ साक्षिणः पुरतो भातं लिङ्गं देहेन संयुतम् ।
चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः ॥ १६ ॥ अस्य जीव-
त्वमारोपात्साक्षिण्यप्यवभासते । आवृतौ तु विनष्टायां भेदे भाते
प्रयाति तत् ॥ १७ ॥ तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति । या
शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते ॥ १८ ॥ अत्राप्यावृतिनाशेन
विभाति ब्रह्मसर्गयोः । भेदस्तयोर्विकारः स्यात्सर्गे न ब्रह्मणि क्वचित्
॥ १९ ॥ अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकम् । आद्यत्रयं
ब्रह्मरूपं जगद्रूपं ततोऽद्वयम् ॥ २० ॥ खं वाय्वग्निजलोर्वीषु देव-
तिर्यङ्नरादिषु । अभिन्ना सच्चिदानन्दा भिद्येते रूपनामनी ॥ २१ ॥
उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः । समाधिं सर्वदा कुर्याद्धृदये
चाथवा बहिः ॥ २२ ॥ सविकल्पो निर्विकल्पः समाधिर्द्विविधो
हृदि । दृश्यशब्दानुविद्धो यः सविकल्पः पुनर्द्विधा ॥ २३ ॥ कामा-
द्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम् । ध्यायेद्दृश्यानुविद्धोऽयं स-
माधिः सविकल्पकः ॥२४॥ असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ।
अस्मीति शब्दविद्धोऽयं समाधिः सविकल्पकः ॥ २५ ॥ स्वानुभूति-
रसावेशाद्दृश्यशब्दानुपेक्षते । निर्विकल्पसमाधिः स्यान्निर्वातस्थित-
दीपवत् ॥ २६ ॥ हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि ।
समाधिराद्यः सन्मात्रान्नामरूपपृथक्कृतिः ॥ २७ ॥ अखण्डैकरसं
वस्तु सच्चिदानन्दलक्षणम् । इत्यविच्छिन्नचिन्तेयं समाधिर्मध्यमो

भवेत् ॥ २८ ॥ स्तब्धीभावो रसास्वादात्तृतीयः पूर्ववन्मतः । एतैः समाधिभिः षड्भिर्नयेत्कालं निरन्तरम् ॥ २९ ॥ देहाभिमाने गलिते विज्ञाते परमात्मनि । यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ३० ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ३१ ॥ अवच्छिन्नश्चिदाभासस्तृतीयः स्वप्नकल्पतः । विज्ञेयस्त्रिविधो जीवस्तत्राद्यः पारमार्थिकः ॥ ३२ ॥ अवच्छेदः कल्पितः स्यादवच्छेद्यं तु वास्तवम् । तस्मिञ्जीवत्वमारोपाद्ब्रह्मत्वं तु स्वभावतः ॥ ३३ ॥ अवच्छिन्नस्य रूपस्य पूर्णेन ब्रह्मणैकता । तत्त्वमस्यादिवाक्यानि जगुर्नेतरजीवयोः ॥ ३४ ॥ ब्रह्मण्यवस्थिता माया विक्षेपावृतिरूपिणी । आवृत्या खण्डतां तस्मिन् जगज्जीवौ प्रकल्पितौ ॥ ३५ ॥ जीवो धीस्थचिदाभासो भवेद्भोक्ता हि कर्मकृत् । भोग्यरूपमिदं सर्वं जगत्स्याद्भूतभौतिकम् ॥ ३६ ॥ अनादिकालमारभ्य मोक्षात्पूर्वमिदं द्वयम् । व्यवहारे स्थितं तस्मादुभयं व्यावहारिकम् ॥ ३७ ॥ चिदाभासस्थिता निद्रा विक्षेपावृतिरूपिणी । आवृत्य जीवजगती पूर्वे नूत्ने तु कल्पयेत् ॥ ३८ ॥ प्रतीतकाल एवैते स्थितत्वात्प्रातिभासिके । न हि स्वप्नप्रबुद्धस्य पुनः स्वप्नस्थितिस्तयोः ॥ ३९ ॥ प्रातिभासिकजीवो यस्तज्जगत्प्रातिभासिकम् । वास्तवं मन्यतेऽन्यस्तु मिथ्येति व्यावहारिकः ॥ ४० ॥ व्यावहारिकजीवो यस्तज्जगद्व्यावहारिकम् । सत्यं प्रत्येति मिथ्येति मन्यते पारमार्थिकः ॥ ४१ ॥ पारमार्थिकजीवस्तु ब्रह्मैक्यं पारमार्थिकम् । प्रत्येति वीक्षते नान्यद्वीक्षते त्वनृतात्मनः ॥ ४२ ॥ माधुर्यद्रवशैत्यादिजलधर्मास्तरङ्गके । अनुगम्याऽथ तन्निष्ठे फेनेऽप्यनुगता यथा ॥ ४३ ॥ साक्षिस्थाः सच्चिदानन्दाः सम्बन्धाद्व्यावहारिके । तद्द्वारेणानुगच्छन्ति तथैव प्रातिभासिके ॥ ४४ ॥ लये

फेनस्य तद्धर्मा द्रवाद्यास्तु तरङ्गके। तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा ॥ ४५ ॥ प्रातिभासिकजीवस्य लये स्युर्व्यावहारिके। तल्लये सच्चिदानन्दाः पर्यवस्यन्ति साक्षिणि ॥ ४६ ॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीशंकराचार्यविरचितं वाक्यसुधास्तोत्रं संपूर्णम् ॥

## ३८६. हस्तामलकस्तोत्रम्।

श्रीगणेशाय नमः ॥ कस्त्वं शिशो कस्य कुतोऽसि गंता किं नाम ते त्वं कुत आगतोऽसि। एतन्मयोक्तं वद चार्भक त्वं मत्प्रीतये प्रीतिविवर्धनोऽसि ॥ १ ॥ हस्तामलक उवाच ॥ नाहं मनुष्यो न च देवयक्षौ न ब्राह्मणक्षत्रियवैश्यशूद्राः। न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः ॥ २ ॥ निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः। रविर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥ यमग्न्युष्णवन्नित्यबोधस्वरूपं मनश्चक्षुरादीन्यबोधात्मकानि। प्रवर्तंत आश्रित्य निष्कंपमेकं स नित्योपलब्धिस्वरूपोऽह० ॥ ४ ॥ मुखाभासको दर्पणो दृश्यमानो मुखत्वात्पृथक्त्वेन नैवास्तु वस्तु। चिदाभासको धीषु जीवोऽपि तद्वत् स नित्योपलब्धिस्वरूपो० ॥ ५ ॥ यथा दर्पणाभाव आभासहानौ मुखं विद्यते कल्पनाहीनमेकम्। तथा धीवियोगे निराभासको यः स नित्योप० ॥ ६ ॥ मनश्चक्षुरादेर्वियुक्तः स्वयं यो मनश्चक्षुरादेर्मनश्चक्षुरादिः। मनश्चक्षुरादेरगम्यस्वरूपः स नित्योप० ॥ ७ ॥ य एको विभाति स्वतःशुद्धचेताः प्रकाशस्वरूपोऽपि नानेव धीषु। शरावोदकस्थो यथा भानुरेकः स नित्योपल० ॥ ८ ॥ यथाऽनेकचक्षुःप्रकाशो रविर्न क्रमेण प्रकाशीकरोति प्रकाश्यम्। अनेका धियो यस्तथैकः प्रबोधः स

नित्योपल० ॥ ९ ॥ विवस्वत्प्रभातं यथारूपमक्षं प्रगृह्णाति नाभातमेवं विवस्वान् । यदाभात आभासयत्यक्षमेकः स नित्योपल० ॥ १० ॥ यथा सूर्य एकोऽप्स्वनेकश्चलासु स्थिरास्वप्यनन्यद्विभाव्यस्वरूपः । चलासु प्रभिन्नः सुधीष्वेक एव स नित्योपल० ॥ ११ ॥ घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढः । तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपल० ॥ १२ ॥ समस्तेषु वस्तुष्वनुस्यूतमेकं समस्तानि वस्तूनि यन्न स्पृशंति । वियद्वत्सदा शुद्धमच्छस्वरूपः स नित्यो० ॥ १३ ॥ उपाधौ यथा भेदता सन्मणीनां तथा भेदता बुद्धिभेदेषु तेऽपि । यथा चंद्रिकाणां जले चंचलत्वं तथा चंचलत्वं तवापीह विष्णो ॥ १४ ॥ इति श्रीमच्छंकराचार्यकृतं हस्तामलकस्तोत्रं संपूर्णम् ॥

## ३८७. आत्मबोधः ।

श्रीगणेशाय नमः ॥ तपोभिः क्षीणपापानां शांतानां वीतरागिणाम् । मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥ १ ॥ बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् । पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति ॥ २ ॥ अविरोधितया कर्म नाविद्यां विनिवर्तयेत् । विद्याऽविद्यां निहंत्येव तेजस्तिमिरसंघवत् ॥ ३ ॥ परिच्छिन्न इवाज्ञानात्तन्नाशे सति केवलः । स्वयं प्रकाशते ह्यात्मा मेघापायेऽंशुमानिव ॥ ४ ॥ अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्वि निर्मलम् । कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ ५ ॥ संसारः स्वप्नतुल्यो हि रागद्वेषादिसंकुलः । स्वकाले सत्यवद्भाति प्रबोधे सत्यवन्नवेत् ॥ ६ ॥ तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा । यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥ ७ ॥ सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः । व्यक्तयो विविधाः सर्वा हाटके कटका-

दिवत् ॥ ८ ॥ उपादानेऽखिलाधारे जगन्ति परमेश्वरे । सर्गस्थितिलयान्यान्ति बुद्बुदानीव वारिणि ॥ ९ ॥ यथाकाशो हृषीकेशो नानोपाधिगतो विभुः । तद्भेदाद्भिन्नवद्भाति तन्नाशे सति केवलः ॥ १० ॥ नानोपाधिवशादेव जातिवर्णाश्रमादयः । आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥ ११ ॥ पंचीकृतमहाभूतसंभवं कर्मसंचितम् । शरीरं सुखदुःखानां भोगायतनमुच्यते ॥ १२ ॥ पंचप्राणमनोबुद्धिर्दशेंद्रियसमन्वितम् । अपंचीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनम् ॥ १३ ॥ अनाद्यविद्याऽनिर्वाच्याकारणोपाधिरुच्यते । उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १४ ॥ पंचकोशादियोगेन तत्तन्मय इव स्थितः । शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको यथा ॥ १५ ॥ वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यावघाततः । आत्मानमंतरं शुद्धं विविच्यात्तंडुलं यथा ॥ १६ ॥ सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते । बुद्धावेवावभासेत स्वच्छेषु प्रतिबिंबवत् ॥ १७ ॥ देहेंद्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम् । तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥ १८ ॥ व्यापृतेष्विंद्रियेष्वात्मा व्यापारीवाविवेकिनाम् । दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥ १९ ॥ आत्मचैतन्यमाश्रित्य देहेंद्रियमनोधियः । स्वकीयार्थेषु वर्तंते सूर्यालोकं यथा जनाः ॥ २० ॥ देहेन्द्रियगुणान्कर्माण्यमले सच्चिदात्मनि । अध्यस्यंत्यविवेकेन गगने नीलिमादिवत् ॥ २१ ॥ अज्ञानान्मनसोपाधेः कर्तृत्वादीनि चात्मनि । कल्प्यंतेंऽबुगते चंद्रे चलनादिर्यथांभसः ॥ २२ ॥ रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते । सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ॥ २३ ॥ प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता । स्वभावः सच्चिदानंदनित्यनिर्मलतात्मनः ॥ २४ ॥

आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम् । संयोज्य चाविवेकेन जानामीति प्रवर्तते ॥ २५ ॥ आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति । जीवः सर्वमलं ज्ञात्वा कर्ता द्रष्टेति मुह्यति ॥ २६ ॥ रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् । नाहं जीवः परात्मेति ज्ञातं चेन्निर्भयो भवेत् ॥ २७ ॥ आत्मावभासयत्येको बुद्ध्यादीनींद्रियाणि च । दीपो घटादिवत्स्वात्मा जडैस्तैर्नावभास्यते ॥ २८ ॥ स्वबोधेनान्यबोधेच्छा बोधरूपतयात्मनः । न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने ॥ २९ ॥ निषिध्य निखिलोपाधीन्नेतिनेतीति वाक्यतः । विद्यादैक्यं महावाक्यैर्जीवात्मपरमात्मनोः ॥ ३० ॥ आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरम् । एतद्विलक्षणं विद्यादहं ब्रह्मेति निर्मलम् ॥ ३१ ॥ देहान्यत्वान्न मे जन्मजराकार्श्यलयादयः । शब्दादिविषयैः संगो निरिंद्रियतया न च ॥ ३२ ॥ अमनस्त्वान्न मे दुःखरागद्वेषभयादयः । अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिशासनात् ॥ ३३ ॥ निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरंजनः । निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ३४ ॥ अहमाकाशवत्सर्वबहिरंतर्गतोऽच्युतः । सदा सर्वसमः शुद्धो निःसंगो निर्मलोऽचलः ॥ ३५ ॥ नित्यशुद्धविमुक्तैकमखंडानंदमद्वयम् । सत्यं ज्ञानमनंतं यत्परं ब्रह्माहमेव तत् ॥ ३६ ॥ एवं निरंतराभ्यस्ता ब्रह्मैवास्मीति वासना । हरत्यविद्याविक्षेपान् रोगानिव रसायनम् ॥ ३७ ॥ विविक्तदेश आसीनो विरागो विजितेंद्रियः । भावयेदेकमात्मानं तमनंतमनन्यधीः ॥ ३८ ॥ आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया सुधीः । भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥ ३९ ॥ नामरूपादिकं सर्वं विहाय परमार्थवित् । परिपूर्णचिदानंदस्वरूपेणावतिष्ठते ॥ ४० ॥

ज्ञातृज्ञानज्ञेयभेदः परात्मनि न विद्यते । चिदानंदैकरूपत्वाद्दीप्यते स्वयमेव हि ॥ ४१ ॥ एवमात्मारणौ ध्यानमथने सततं कृते । उदितावगतिर्ज्वाला सर्वाज्ञानेंधनं दहेत् ॥ ४२ ॥ अरुणेनेव बोधेन पूर्वं संतमसि हृते । तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४३ ॥ आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया । तन्नाशे प्राप्तवद्भाति स्वकंठाभरणं यथा ॥ ४४ ॥ स्थाणौ पुरुषवद्भ्रांत्या कृता ब्रह्मणि जीवता । जीवस्य तात्त्विके रूपे तस्मिन् दृष्टे निवर्तते ॥ ४५ ॥ तत्त्वत्स्वरूपानुभवादुत्पन्नं ज्ञानमंजसा । अहं-ममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥ ४६ ॥ सम्यग्विज्ञानवान् योगी स्वात्मन्येवाखिलं स्थितम् । एवं च सर्वमात्मानमीक्षते ज्ञानचक्षुषा ॥ ४७ ॥ आत्मैवेदं जगत्सर्वमात्मनोऽन्यन्न विद्यते । मृदो यद्वद्घटादीनि स्वात्मानं सर्वमीक्षते ॥ ४८ ॥ जीवन्मुक्तस्तु तद्विद्वान् पूर्वोपाधिगुणांस्त्यजेत् । सच्चिदानंदरूपत्वाद्भवेद्भ्रमरकीटवत् ॥ ४९ ॥ तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान् । योगी शांतिसमायुक्तो ह्यात्मारामो विराजते ॥५०॥ बाह्यानित्यसुखासक्तिं हित्वाऽऽत्मसुखनिर्वृतः । घटस्थदीपवत्स्वच्छः स्वांतरेव प्रकाशते ॥ ५१ ॥ उपाधिस्थोऽपि तद्धर्मैर्न लिप्तो व्योमवन्मुनिः । सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥ ५२ ॥ उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः । जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा ॥ ५३ ॥ यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् । यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥ ५४ ॥ यद्दृष्ट्वा न परं दृश्यं यद्भूत्वा न पुनर्भवः । यज्ज्ञात्वा न परं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥ ५५ ॥ तिर्यगूर्ध्वमधः पूर्णं सच्चिदानंदमव्ययम् । अनंतं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५६ ॥ अतद्व्यावृत्तिरूपेण वेदांतैर्लक्ष्यतेऽव्ययम् । अखंडानंदमेकं यत्तद्ब्रह्मेत्यव-

धारयेत् ॥ ५७ ॥ अखंडानंदरूपस्य तस्यानंदलवाश्रिताः । ब्रह्माद्यास्तारतम्येन भवंत्यानंदिनोऽखिलाः ॥ ५८ ॥ तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः । तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥५९॥ अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम् । अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत् ॥ ६० ॥ यद्भासा भास्यतेऽर्कादि भास्यैर्यत्तु च भास्यते । येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् ॥ ६१ ॥ स्वयमंतर्बहिर्व्याप्य भासयन्नखिलं जगत् । ब्रह्म प्रकाशते वह्निप्रतप्तायसपिंडवत् ॥६२॥ जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किंचन । ब्रह्मान्यद्भाति चेन्मिथ्या यथा मरुमरीचिका ॥ ६३ ॥ दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् । तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानंदमद्वयम् ॥ ६४ ॥ सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्ष्यते । अज्ञानचक्षुर्नेक्षेत भास्वंतं भानुमंधवत् ॥ ६५ ॥ श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः । जीवः सर्वमलान्मुक्तः स्वर्णवद्द्योतते स्वयम् ॥६६॥ हृदाकाशोदितो ह्यात्मा बोधभानुस्तमोपहृत् । सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते ॥ ६७ ॥ दिग्देशकालाद्यनपेक्ष्य सर्वगं शीतादिहृन्नित्यसुखं निरंजनम् । यः स्वात्मतीर्थं भजते विनिष्क्रियः स सर्ववित्सर्वगतोऽमृतो भवेत् ॥ ६८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यकृत आत्मबोधः संपूर्णः ॥

## ३८८. आत्मावबोधस्तुतिः ।

श्रीगणेशाय नमः ॥ जाग्रत्स्वप्नसुषुप्तिषु शैशवकौमारवार्धकेष्वपि च । अनुवर्तमानमनिशं ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १ ॥ सद्गुरुसेवननिरतैः स्वाश्रमवर्णोचितानि कर्माणि । कुर्वद्भिर्विविदिषितं ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ २ ॥ स्थूलात्सूक्ष्माद्धेतोर्देहाद्भेदेन योगनिष्णातैः । अनुचिन्त्यमानमसकृद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ३ ॥

यद्देहमखिलदेहेष्वनवस्थेषु व्यवस्थितं विभु च । महदाममभूत-मभयं ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ४ ॥ हृदयस्थितानशे-षांस्त्यक्त्वा कामान्समश्नुतेऽत्रैव । यत्परहंसस्तदहं ब्रह्मास्म्याम्नायम-स्तकावेद्यम् ॥ ५ ॥ यदबोधाज्जगदखिलं विभाति पुरुषस्य सत्यतया । यद्बोधाच्च मृषा तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ६ ॥ प्रविलाप्य दृश्यमानं मिथ्येत्याचार्यवाक्यतः शास्त्रात् । यत्प्राप्नोति नरस्तद्ब्रह्मा-स्म्याम्नायमस्तकावेद्यम् ॥ ७ ॥ यस्याज्ञानादखिलानर्थादिमकारणं शरीरादौ । आत्मत्वधीरभूत्तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ८ ॥ यत्साक्षात्कृतये हि श्रवणं मननं तथा ध्यानम् । प्राहुस्त्रय्यन्तास्त-द्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ९ ॥ नद्यास्तीरे पुलिने गिरिमौलौ काननस्य कोणे यत् । ध्यायन्ति यतिवरास्तद्ब्रह्मास्म्याम्नायमस्तका-वेद्यम् ॥ १० ॥ यत्र स्थितो विजानातीन्द्रोपेन्द्रादिपदमनीषदिति । तत्सुखविश्रान्तिपदं ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ११ ॥ श्रुत्या-चार्यकृपातो योगाभ्यासेन चेश्वरकटाक्षात् । प्रभवति यद्बोधस्तद्ब्रह्मा-स्म्याम्नायमस्तकावेद्यम् ॥ १२ ॥ यस्मिन्स्थितो न दुःखैरपि गुरुभिश्चाल्यते जातु । पुरुषः सुखरूपं तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १३ ॥ यत्पृथ्व्यादिषु तिष्ठद्यमयति यद्वेदनैव पृथ्व्यादिः । अन्तर्याम्यभिधं तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १४ ॥ उद्दालकः स्वपुत्रं यत्तत्त्वमसीति बोधयामास । साम्नामन्ते तदहं ब्रह्मास्म्या-म्नायमस्तकावेद्यम् ॥ १५ ॥ विषयासक्तहृदां यद्दूरे तदसक्तचेतसां निकटे । उपरतवरलभ्यं तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १६ ॥ सनकादिभ्यः पूर्वं वटमूले शंभुराह मौनेन । चिन्मुद्रया च यत्तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १७ ॥ विनियम्य चक्षुरादी-

न्प्राणापानौ च चेतसा सह यत् । ध्यायन्ति योगिनस्तद्ब्रह्मास्म्या-म्नायमस्तकावेद्यम् ॥ १८ ॥ इति नृसिंहभारतीस्वामिविरचिता-त्मावबोधस्तुतिः संपूर्णा ॥

## ३८९. साधनपंचकम् ।

श्रीगणेशाय नमः ॥ वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् । पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयतामात्मेच्छा व्यवसीयतां निज-गृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥ संगः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां शांत्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्य-ताम् । सद्विद्वानुपसर्प्यतां प्रतिदिनं तत्पादुके सेव्यतां ब्रह्मैकाक्षर-मर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥ वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां दुस्तर्कात्सुविरम्यतां श्रुतिम-तस्तर्कोऽनुसंधीयताम् । ब्रह्मैवास्मि विभाव्यतामहरहर्गर्वः परित्य-ज्यतां देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादः परित्यज्यताम् ॥ ३ ॥ क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन संतुष्यताम् । शीतोष्णादि विषह्यतां न तु वृथा वाक्यं समुच्चार्यतामौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्य-मुत्सृज्यताम् ॥ ४ ॥ एकांते सुखमास्यतां परतरे चेतः समाधी-यतां पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् । प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां प्रारब्धं त्विह भुज्य-तामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥ यः श्लोकपंचकमिदं पठते मनुष्यः संचिंतयत्यनुदिनं स्थिरतामुपेत्य । तस्याशु संसृतिदवानल-तीव्रघोरतापः प्रशान्तिमुपयाति चितिप्रसादात् ॥ ६ ॥ इति श्रीमच्छंकराचार्यविरचितं साधनपंचकं संपूर्णम् ॥

## ३९०. प्रश्नोत्तरमालिका ।

श्रीगणेशाय नमः ॥ किं साध्यं मनुजानां बुद्धेः शुद्धत्वमेव बहुयत्नैः । किं त्याज्यं खलसङ्गो देहाहंकारममते च ॥ १ ॥ किं तीर्थं वेदशिरः किं देयं पात्र आत्मसंबोधः । किं भोग्यं सहजसुखं किं वाऽभोग्यं परेच्छया लब्धम् ॥ २ ॥ किं कष्टं यत्सत्यं किं वा सहजं परं ब्रह्म । कर्तव्यं किं सर्वैरात्माऽकर्तेति बुद्धिरेव सदा ॥ ३ ॥ आदातुं संत्यक्तुं किमशक्यं ब्रह्म निजरूपम् । किं वा दुःखमबोधः किं सुखमात्मावबोधतः शान्तिः ॥ ४ ॥ विषमं विषं तु किं वा यत्किंचित्कस्यचिच्च या चिन्ता । परमामृतं तु किं वा श्रीगुरुवाक्यं कृपानिबिडम् ॥ ५ ॥ को गुरुरधिमन्तव्यो देशिकशिष्यत्वबाधबोधयिता । अध्येतव्यं किं खलु यावद्वेदार्थदर्शकः प्रणवः ॥ ६ ॥ कोऽनध्यायोऽध्ययने यावत्सद्गुरुमलब्धवांस्तावत् । कः प्रणवार्थस्तूष्णीं किं ध्येयं ध्येयमात्रसंत्यागः ॥ ७ ॥ कः शूरो दृङ्मात्रान्मायाभेत्ता स्वयंप्रकाशज्ञः । किं चिन्त्यं मनुजैरिह चिन्ताबीजं विचित्रजगत इति ॥ ८ ॥ किं पेशलं हि लोके विद्वच्चरितं विरुद्धशास्त्रमपि । सद्भक्त्या किं कार्यं सज्जनपदरजसि भूयसः स्नानम् ॥ ९ ॥ आबाल्यात्किं कार्यं निरहंकारेण साधुपदसेवा । भाग्योदयस्तु को वा गुरुवचनादद्वितीयपदलाभः ॥ १० ॥ मुक्तैः किं कर्तव्यं प्रारब्धाधीनसदसताभोगः । पुंसां किं सर्वस्वं सच्चित्सुखनामिका गुरोर्मूर्तिः ॥ ११ ॥ का कामधेनुरनघा वेदे देवे तथा गुरौ श्रद्धा । को वैद्यो रोगहरो ब्रह्मिष्ठः सदयहृदयगुरुराजः ॥१२॥ कः पुत्रः स्वोद्धर्ता ज्ञातस्वात्मैव चिन्मयः पुरुषः । कः सुखशायी लोके संसृतिमिथ्यात्वपक्वमतितृप्तः ॥ १३ ॥ किं त्याज्यं साधुकृते चरिते कुत्सितमतिस्तु साधुजनैः । कः शत्रुर्दुःखकरो गुरुवचने

संशयो महाशत्रुः ॥ १४ ॥ कः शोभते नितान्तं निःस्पृहताशालि-निजबोधः । किं याच्यं सद्गुरुषु स्वोद्धारः सर्वदैन्यपरिहारः ॥ १५ ॥ को वा मान्यः सिद्धो बालोऽपि ब्रह्मभावमतिमान् यः । का वा दरिद्रसीमा मूढप्रियसिद्ध्यहंकृतिः प्रोक्ता ॥ १६ ॥ किं सोढव्यं विदुषा खलवचनं विषविनिर्मितं कठिनम् । स्थेयं कथं खलेषु स्वीयां निष्ठां दृढं समाच्छाद्य ॥ १७ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य-कृष्णानन्दसरस्वतीविरचिता प्रश्नोत्तरमालिका संपूर्णा ॥

## ३९१. भ्रष्टाष्टकम् ।

श्रीगणेशाय नमः ॥ विश्वं सत्यं मनुते तनुते कर्माणि लोकसंसिद्ध्यै । वाचा मिथ्या जगदिति जल्पति नो वेत्ति यो महाभ्रष्टः ॥ १ ॥ ब्रह्मैवेदं जल्पति दोषादोषोत्तमाधमान् पश्यन् । नग्नो भूत्वा विचरस्यवधूतत्वं प्रदर्शयन् भ्रष्टः ॥ २ ॥ कृत्याकृत्यमशेषं त्यक्तुमशक्तः श्रुतेरगोचरताम् । आत्मनि जल्पन्हास्यास्पदतामित्येष मानवो भ्रष्टः ॥ ३ ॥ पाशाष्टकसंकष्टश्लिष्टतनुर्मृष्टभोजनप्रीतः । शिष्टोऽहं मन्वानः कष्टमहो दुष्टमानवो भ्रष्टः ॥ ४ ॥ आत्मैवेदं जल्पन् लोकोक्तीरसहमानमेधावी । स्तुतिवाक्यानि श्रोतुं धावंस्तुष्टो न किं भवेद्भ्रष्टः ॥ ५ ॥ यस्मिन्स्वस्य च निष्ठा तद्धर्मिष्ठानशिष्टगणनायाम् । कुर्वन्कर्म हतोऽयं यद्यपि शिष्टो न किं भवेद्भ्रष्टः ॥ ६ ॥ कर्तृत्वं भोक्तृत्वं मन्वानः स्वात्मनि प्रभौ शंभौ । रोदिति हा किं कृतमिति किं वा भोक्तव्यमित्यसौ भ्रष्टः ॥ ७ ॥ चिन्मात्रं स्वात्मानं देहं मन्वान एजते यमतः । सर्वात्मानमबुद्ध्वा ब्रह्मापि स्यादहो किल भ्रष्टः ॥ ८ ॥ भ्रष्टाष्टकमेतद्यत्प्रविचारयतीह मानवो धन्यः । मान्यः स्याल्लोकेषु भ्रष्टत्वं वेत्ति निजचारित्रात् ॥ ९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कृष्णानन्दसरस्वतीविरचितं भ्रष्टाष्टकं संपूर्णम् ॥

## ३९२. मनीषापंचकम् ।

श्रीगणेशाय नमः ॥ सत्याचार्यस्य गमने कदाचिन्मुक्तिदायकम् । काशीक्षेत्रं प्रति सहगौर्या मार्गे तु शंकरम् ॥ १ ॥ अंत्यवेषधरं दृष्ट्वा गच्छ गच्छेति चाब्रवीत् । शंकरः सोऽपि चांडालस्तं पुनः प्राह शंकरम् ॥ २ ॥ अन्नमयादन्नमयं ह्यथवा चैतन्यमेव चैतन्यात् । द्विजवर दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥ ३ ॥ किं गंगांबुनि बिंबितेंऽबरमणौ चंडालवाटीपयःपूरे चांतरमस्ति कांचनघटीमृत्कुंभयोर्वांबरे । प्रत्यग्वस्तुनि निस्तरंगसहजानंदावबोधाम्बुधौ विप्रोऽयं श्वपचोऽयमित्यपि महान् कोऽयं विभेदभ्रमः ॥ ४ ॥ जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते या ब्रह्मादिपिपीलिकांततनुषु प्रोता जगत्साक्षिणी । सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञापि यस्यापि चेच्चांडालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ ५ ॥ ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं सर्वं चैतदविद्यया त्रिगुणयाऽशेषं मया कल्पितम् । इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले चांडालोऽस्तु स तु० ॥ ६ ॥ शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरोर्नित्यं ब्रह्म निरंतरं विमृशता निर्व्याजशांतात्मना । भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके प्रारब्धाय समर्पितं स्ववपुरित्येषा मनीषा मम ॥ ७ ॥ या तिर्यङ्नरदेवताभिरहमित्यंतः स्फुटा गृह्यते यद्भासा हृदयाक्षदेहविषया भांति स्वतोऽचेतनाः । तां भास्यैः पिहितार्कमंडलनिभां स्फूर्तिं सदा भावयन् योगी निर्वृतमानसो हि गुरुरित्येषा मनीषा मम ॥ ८ ॥ यत्सौख्यांबुधिलेशलेशत इमे शक्रादयो निर्वृता यच्चित्ते नितरां प्रशांतकलने लब्ध्वा मुनिर्निर्वृतः । यस्मिन्नित्यसुखांबुधौ गलितधीर्ब्रह्मैव न ब्रह्मविद्यः कश्चित्स सुरेंद्रवंदितपदो नूनं मनीषा मम ॥ ९ ॥ इति मनीषापंचकं संपूर्णम् ॥

## ३९३. कौपीनपञ्चकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वेदान्तवाक्येषु सदा रमन्तो भिक्षान्नमात्रेण च तुष्टिमन्तः । अशोकवन्तः करुणैकवन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥ १ ॥ मूलं तरोः केवलमाश्रयन्तः पाणिद्वयं भोक्तुममत्रयन्तः । कन्थामपि स्त्रीमिव कुत्सयन्तः कौपीनवन्तः खलु० ॥ २ ॥ देहाभिमानं परिहृत्य दूरादात्मानमात्मन्यवलोकयन्तः । अहर्निशं ब्रह्मणि ये रमन्तः कौपीनवन्तः खलु० ॥ ३ ॥ स्वानन्दभावे परितुष्टिमन्तः स्वशान्तसर्वेन्द्रियवृत्तिमन्तः । नान्तं न मध्यं न बहिः स्मरन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥ ४ ॥ पञ्चाक्षरं पावनमुच्चरन्तः पतिं पशूनां हृदि भावयन्तः । भिक्षाशना दिक्षु परिभ्रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥ ५ ॥ इति कौपीनपञ्चकस्तोत्रं संपूर्णम् ॥

## ३९४. परा पूजा ।

श्रीगणेशाय नमः ॥ पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् । स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥ १ ॥ निर्मलस्य कुतः स्नानं वस्त्रं विश्वोदरस्य च । निरालंबस्योपवीतं पुष्पं निर्वासनस्य च ॥ २ ॥ निर्लेपस्य कुतो गंधो रम्यस्याभरणं कुतः । नित्यतृप्तस्य नैवेद्यस्तांबूलं च कुतो विभोः ॥ ३ ॥ प्रदक्षिणा ह्यनंतस्य ह्यद्वयस्य कुतो नतिः । वेदवाक्यैरवेद्यस्य कुतः स्तोत्रं विधीयते ॥ ४ ॥ स्वयंप्रकाशमानस्य कुतो नीराजनं विभोः । अंतर्बहिश्च पूर्णस्य कथमुद्वासनं भवेत् ॥ ५ ॥ एवमेव परा पूजा सर्वावस्थासु सर्वदा । एकबुद्ध्या तु देवेशे विधेया ब्रह्मवित्तमैः ॥ ६ ॥ इति परा पूजा संपूर्णा ॥

## ३९५. वाक्यवृत्तिः ।

श्रीगणेशाय नमः ॥ सर्गस्थितिप्रलयहेतुमचिंत्यशक्तिं विश्वेश्वरं विदितविश्वमनंतमूर्तिम् । निर्मुक्तबंधनमपारसुखांबुराशिं श्रीवल्लभं विमलबोधघनं नमामि ॥ १ ॥ यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च । इत्थं विजानामि सदात्मरूपस्तस्यांघ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥ २ ॥ तापत्रयार्कसंतप्तः कश्चिदुद्विग्नमानसः । शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति ॥ ३ ॥ अनायासेन येनास्मान्मुच्येयं भवबंधनात् । तन्मे संक्षिप्य भगवन्कैवल्यं कृपया वद ॥ ४ ॥ साध्वी ते वचनव्यक्तिः प्रतिभाति वदामि ते । इदं तदिति विस्पष्टं सावधानमनाः शृणु ॥ ५ ॥ तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः । तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥ ६ ॥ को जीवः कः परश्चात्मा तादात्म्यं वा कथं तयोः । तत्त्वमस्यादिवाक्यं वा कथं तत्प्रतिपादयेत् ॥ ७ ॥ अत्र ब्रूमः समाधानं कोऽन्यो जीवस्त्वमेव हि । यस्त्वं पृच्छसि मां कोऽहं ब्रह्मैवासि न संशयः ॥ ८ ॥ पदार्थमेव जानामि नाद्यापि भगवन् स्फुटम् । अहंब्रह्मेति वाक्यार्थं प्रतिपद्ये कथं वद ॥ ९ ॥ सत्यमाह भवानत्र विज्ञानं नैव विद्यते । हेतुः पदार्थबोधो हि वाक्यार्थावगतेरिह ॥ १० ॥ अंतःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः । आनंदरूपः सत्यः सन् किं नात्मानं प्रपद्यसे ॥ ११ ॥ सत्यानंदस्वरूपं धीसाक्षिणं बोधविग्रहम् । चिंतयात्मतया नित्यं त्यक्त्वा देहादिगां धियम् ॥ १२ ॥ रूपादिमान् यतः पिंडस्ततो नात्मा घटादिवत् । वियदादिमहाभूतविकारत्वाच्च कुंभवत् ॥ १३ ॥ अनात्मा यदि पिण्डोऽयमुक्तहेतुबलान्मतः । करामलकवत्साक्षादात्मानं प्रतिपादय ॥ १४ ॥ घटद्रष्टा घटाद्भिन्नः

सर्वथा न घटो यथा । देहद्रष्टा तथा देहो नाहमित्यवधारय ॥१५॥ एवमिंद्रियदृङ्नाहमिंद्रियाणीति निश्चिनु । मनो बुद्धिस्तथा प्राणो नाहमित्यवधारय ॥ १६ ॥ संघातो हि तथा नाहमिति दृश्यविलक्षणम् । द्रष्टारमनुमानेन निपुणं संप्रधारय ॥ १७ ॥ देहेंद्रियादयो भावा हानादिव्यापृतिक्षमाः । यस्य सन्निधिमात्रेण सोऽहमित्यवधारय ॥ १८ ॥ अन्नादन्नविकारः सन्नयस्कांतवदेव यः । वृद्ध्यादींश्चालयेत्प्रत्यक् सोऽहमित्यवधारय ॥ १९ ॥ अजडात्मवदाभांति यत्सान्निध्याज्जडा अपि । देहेंद्रियमनः प्राणाः सोऽहमित्यवधारय ॥ २० ॥ अगमन्मे मनोऽन्यत्र सांप्रतं च स्थिरीकृतम् । एवं यो वेत्ति धीवृत्तिं सोऽहमित्यवधारय ॥ २१ ॥ स्वप्नजागरिते सुप्तिं भावाभावौ धियां तथा । यो वेत्त्यविक्रियः साक्षात्सोऽहमित्यवधारय ॥ २२ ॥ घटावभासको दीपो घटादन्यो यथेष्यते । देहावभासको देही तथाहं बोधविग्रहः ॥ २३ ॥ पुत्रवित्तादयो भावा यस्य शेषतया प्रियाः । द्रष्टा सर्वप्रियतमः सोऽहमित्यवधारय ॥ २४ ॥ परप्रेमास्पदतया मा न भूवमहं सदा–। भूयासमिति यो द्रष्टा सोऽहमित्यवधारय ॥ २५ ॥ यः साक्षिलक्षणो बोधस्त्वंपदार्थः स उच्यते । साक्षित्वमपि बोद्धृत्वमविकारितयाऽऽत्मनः ॥ २६ ॥ देहेंद्रियमनःप्राणाहंकृतिभ्यो विलक्षणः । प्रोज्झिताशेषषड्भावविकारस्त्वंपदाभिधः ॥ २७ ॥ त्वमर्थमेवं निश्चित्य तदर्थं चिंतयेत्पुनः । अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥ २८ ॥ निरस्ताशेषसंसारदोषोऽस्थूलादिलक्षणः । अदृश्यत्वादिगुणकः पराकृततमोमलः ॥ २९ ॥ निरस्तातिशयानंदः सत्यप्रज्ञानविग्रहः । सत्तास्वलक्षणः पूर्णः परात्मेति गीयते ॥ ३० ॥ सर्वज्ञत्वं परेशत्वं तथा संपूर्णशक्तिता । वेदैः समर्थ्यते यस्य तद्ब्रह्मेत्यवधारय ॥३१॥

यज्ज्ञानात्सर्वविज्ञानं श्रुतिषु प्रतिपादितम् । मृदाद्यनेकदृष्टांतैस्तद्ब्रह्मे-
त्यवधारय ॥ ३२ ॥ यदानंत्यं प्रतिज्ञाय श्रुतिस्तास्सिद्धये जगौ ।
तत्कार्यत्वं प्रपंचस्य तद्ब्रह्मेत्यवधारय ॥ ३३ ॥ विजिज्ञास्यतया यच्च
वेदांतेषु मुमुक्षुभिः । समर्थ्यतेऽतियत्नेन तद्ब्रह्मेत्यवधारय ॥ ३४ ॥
जीवात्मना प्रवेशश्च नियंतृत्वं च तान् प्रति । श्रूयते यस्य वेदेषु
तद्ब्रह्मेत्यवधारय ॥ ३५ ॥ कर्मणां फलदातृत्वं यस्यैव श्रूयते श्रुतौ ।
जीवानां हेतुकर्तृत्वं तद्ब्रह्मेत्यवधारय ॥ ३६ ॥ तत्त्वंपदार्थौ निर्णीतौ
वाक्यार्थश्चिंत्यतेऽधुना । तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः
॥ ३७ ॥ संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः । अखंडै-
करसत्वेन वाक्यार्थो विदुषां मतः ॥ ३८ ॥ प्रत्यग्बोधो य आभाति
सोऽद्वयानंदलक्षणः । अद्वयानंदरूपश्च प्रत्यग्बोधैकलक्षणः ॥ ३९ ॥
इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् । अब्रह्मत्वं त्वमर्थस्य
व्यावर्तेत तदैव हि ॥ ४० ॥ तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः
शृणु । पूर्णानंदैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ४१ ॥ तत्त्वमस्या-
दिवाक्यं च तादात्म्यप्रतिपादने । लक्ष्यौ तत्त्वंपदार्थौ द्वावुपादाय
प्रवर्तते ॥ ४२ ॥ हित्वा द्वौ शबलौ वाच्यो वाक्यं वाक्यार्थबोधने ।
यथा प्रवर्ततेऽस्माभिस्तथा व्याख्यातमादरात् ॥ ४३ ॥ आलंबन-
तया भाति योऽस्मत्प्रत्ययशब्दयोः । अंतःकरणसंभिन्नबोधः स
त्वंपदाभिधः ॥ ४४ ॥ मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ।
पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ४५ ॥ प्रत्यक् परोक्ष-
तैकस्य सद्द्वितीयत्वपूर्णता । विरुध्यते यतस्तस्माल्लक्षणा संप्रवर्तते
॥ ४६ ॥ मानांतरविरोधे तु मुख्यार्थस्य परिग्रहे । मुख्यार्थेना-
विनाभूते प्रतीतिर्लक्षणोच्यते ॥ ४७ ॥ तत्त्वमस्यादिवाक्येषु लक्षणा

भागलक्षणा । सोऽहमित्यादिवाक्यस्थपदयोरिव नापरा ॥ ४८ ॥ अहंब्रह्मेति वाक्यार्थबोधो यावद्दृढीभवेत् । शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ ४९ ॥ श्रुत्याचार्यप्रसादेन दृढो बोधो यदा भवेत् । निरस्ताशेषसंसारनिदानः पुरुषस्तदा ॥ ५० ॥ विशीर्णकार्यकरणो भूतसूक्ष्मैरनावृतः । विमुक्तकर्मनिगडः सद्य एव विमुच्यते ॥ ५१ ॥ प्रारब्धकर्मवेगेन जीवन्मुक्तो यदा भवेत् । किंचित्कालमनारब्धकर्मबंधस्य संक्षये ॥ ५२ ॥ निरस्तातिशयानंदं वैष्णवं परमं पदम् । पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते ॥ ५३ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचिता वाक्यवृत्तिः समाप्ता ॥

## ३९६. तत्त्वमसिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मनःकल्पितमेवेदं जगज्जीवेशकल्पनम् ॥ तदेकं सम्परित्यज्य निर्वाणमनुभूयताम् ॥ १ ॥ सति सर्वस्मिन् सर्वज्ञत्वं सत्यल्पे वा स्वल्पज्ञत्वम् ॥ सर्वाल्पस्याभावे कस्माज्जीवेशौ वा तत्त्वमसि ॥ २ ॥ सत्यां व्यष्टौ जीवोपाधिः सति सर्वस्मिन्नीशोपाधिः ॥ व्यष्टिसमष्ट्योर्ज्ञाने कस्माज्जीवेशौ वा तत्त्वमसि ॥ ३ ॥ सत्यज्ञाने जीवत्वोक्तिर्मायासत्त्वे त्वीशत्वोक्तिः ॥ मायाविद्याबाधे कस्माज्जीवेशौ वा तत्त्वमसि ॥ ४ ॥ सति वा कार्ये कारणतोक्तिः कारणसत्त्वे कार्यत्वोक्तिः ॥ कार्याकारणभावे कस्माज्जीवेशौ वा तत्त्वमसि ॥ ५ ॥ सति भोक्तव्ये भोक्ताऽयं स्याद्दातव्ये वा दाता स स्यात् ॥ भोग्यो विध्यो भावे कस्माज्जीवेशौ वा तत्त्वमसि ॥ ६ ॥ सत्यज्ञाने गुरुणा बाध्यं सति वा द्वैते शिष्यैर्भाव्यम् ॥ अद्वैतात्मनि गुरुशिष्यौ कौ त्यज रे भेदं तत्त्वमसि ॥ ७ ॥ सत्य-

द्वैते प्राप्तौ यत्नः सति वा द्वैते बाधे यत्नः ॥ द्वैताद्वैते ते संकल्प-स्त्यज रे शेषं तत्त्वमसि ॥ ८ ॥ साक्षित्वं यदि दृश्यं सत्यं दृश्या-सत्त्वे साक्षी त्वं कः ॥ उभयाभावे दर्शनमपि किं तूष्णीं भव रे तत्त्वमसि ॥ ९ ॥ प्रज्ञानामलविग्रहनिजसुखजृम्भणमेतन्नेतरथा ॥ तस्मान्नैवादेयं हेयं तूष्णीं भव रे तत्त्वमसि ॥ १० ॥ ब्रह्मैवाहं ब्रह्मैव त्वं ब्रह्मैकं वा नान्यत्किञ्चित् ॥ निश्चित्येत्थं निजसमसुख-भुक्तूष्णीं भव रे तत्त्वमसि ॥ ११ ॥ एतत्स्तोत्रं प्रपठता विचार्य गुरुवाक्यतः ॥ प्राप्यते ब्रह्मपदवी सत्यं सत्यं न संशयः ॥ १२ ॥

इति श्रीमत्परमहंसकृष्णानन्दसरस्वतीविरचितं तत्त्वमसिस्तोत्रं संपूर्णम् ॥

# संकीर्णस्तोत्राणि ।

## ३९७. कुन्तीस्तुतिः ।

श्रीगणेशाय नमः ॥ नमस्ये पुरुषं त्वाद्यमीश्वरं प्रकृतेः परम् । अलक्ष्यं सर्वभूतानामन्तर्बहिरवस्थितम् ॥ १ ॥ मायाजवनिकाच्छन्नमज्ञाधोक्षजमव्ययम् । न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥ २ ॥ तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥ ३ ॥ कृष्णाय वासुदेवाय देवकीनन्दनाय च । नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ ४ ॥ नमः पङ्कजनाभाय नमः पङ्कजमालिने । नमः पङ्कजनेत्राय नमस्ते पङ्कजाङ्घ्रये ॥ ५ ॥ यथा हृषीकेश खलेन देवकी कंसेन रुद्धातिचिरं शुचार्पिता । विमोचिताहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् ॥ ६ ॥ विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः । मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्म हरेऽभिरक्षिताः ॥ ७ ॥ विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो । भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम् ॥ ८ ॥ जन्मैश्वर्यश्रुतश्रीभिरेधमानमदः पुमान् । नैवार्हत्यभिधातुं वै त्वामकिंचनगोचरम् ॥ ९ ॥ नमोऽकिंचनवित्ताय निवृत्तगुणवृत्तये । आत्मारामाय शान्ताय कैवल्यपतये नमः ॥ १० ॥ मन्ये त्वां कालमीशानमनादिनिधनं विभुम् । समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ॥ ११ ॥ न वेद कश्चिद्भगवंश्चिकीर्षितं तवेहमानस्य नृणां विडम्बनम् । न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्द्वेष्यश्च यस्मिन्विषमा मतिर्नृणाम् ॥ १२ ॥ जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः । तिर्यङ्नृषिषु यादःसु तदत्यन्तविडंबनम् ॥ १३ ॥

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ ६६ ॥ परमेश्वर उवाच ॥ सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ ६७ ॥ पुलस्त्य उवाच ॥ हे जिह्वे रससारज्ञे सर्वदा मधुरप्रिये । नारायणाख्यपीयूषं पिब जिह्वे निरन्तरम् ॥ ६८ ॥ व्यास उवाच ॥ सत्यं सत्यं पुनः सत्यं सत्यं सत्यं वदाम्यहम् । नास्ति वेदात्परं शास्त्रं न देवः केशवात्परः ॥ ६९ ॥ धन्वन्तरिरुवाच ॥ अच्युतानन्तगोविन्दनामोच्चारणभेषजात् । नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ ७० ॥ मार्कण्डेय उवाच ॥ स्वर्णदं मोक्षदं देवं सुखदं जगतो गुरुम् । कथं मुहूर्तमपि तं वासुदेवं न चिन्तयेत् ॥ ७१ ॥ अगस्त्य उवाच ॥ निमिषं निमिषार्धं वा प्राणिनां विष्णुचिन्तनम् । तत्र तत्र कुरुक्षेत्रं प्रयागो नैमिषं वनम् ॥ ७२ ॥ वामदेव उवाच ॥ निमिषं निमिषार्धं वा प्राणिनां विष्णुचिन्तनम् । कल्पकोटिसहस्राणि लभते वाञ्छितं फलम् ॥ ७३ ॥ शुक उवाच ॥ आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ७४ ॥ श्रीमहादेव उवाच ॥ शरीरे जर्जरीभूते व्याधिग्रस्ते कलेवरे । औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥ ७५ ॥ शौनक उवाच ॥ भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः । योऽसौ विश्वम्भरो देवः स किं भक्तानुपेक्षते ॥ ७६ ॥ सनत्कुमार उवाच ॥ यस्य हस्ते गदा चक्रं गरुडो यस्य वाहनम् । शङ्खचक्रगदापद्मी स मे विष्णुः प्रसीदतु ॥ ७७ ॥ एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः । कीर्तयन्ति सुरश्रेष्ठमेवं नारायणं विभुम् ॥ ७८ ॥ इदं पवित्रमायुष्यं पुण्यं पापप्रणाशनम् । दुःस्वप्ननाशनं स्तोत्रं पाण्डवैः

परिकीर्तितम् ॥ ७९ ॥ यः पठेत् प्रातरुत्थाय शुचिस्तद्गतमानसः । गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥ ८० ॥ तत्फलं समवाप्नोति यः पठेदिति संस्तवम् । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ८१ ॥ गङ्गा गीता च गायत्री गोविन्दो गरुडध्वजः । चतुर्गकारसंयुक्तः पुनर्जन्म न विद्यते ॥ ८२ ॥ गीतां यः पठते नित्यं श्लोकार्धं श्लोकमेव वा । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ८३ ॥ इति पाण्डवगीता संपूर्णा ॥

## ४१७. श्रीहरिहरात्मकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ गोविंद माधव मुकुंद हरे मुरारे शंभो शिवेश शशिशेखर शूलपाणे । दामोदराच्युत जनार्दन वासुदेव त्याज्या भटा य इति संततमामनंति ॥ १ ॥ गंगाधरांधकरिपो हर नीलकंठ वैकुंठ कैटभरिपो कमठाब्जपाणे । भूतेश खंडपरशो मृड चंडिकेश त्याज्या भटा य इति संततमामनंति ॥ २ ॥ विष्णो नृसिंह मधुसूदन चक्रपाणे गौरीपते गिरिश शंकर चंद्रचूड । नारायणासुरनिबर्हण शार्ङ्गपाणे त्याज्या भटा य इति संततमा० ॥ ३ ॥ मृत्युंजयोग्र विषमेक्षण कामशत्रो श्रीकांत पीतवसनांबुदनील शौरे । ईशान कृत्तिवसन त्रिदशैकनाथ त्याज्या भटा य० ॥ ४ ॥ लक्ष्मीपते मधुरिपो पुरुषोत्तमाद्य श्रीकंठ दिग्वसन शांत पिनाकपाणे । आनंदकंद धरणीधर पद्मनाभ त्याज्या भटा य इति० ॥ ५ ॥ सर्वेश्वर त्रिपुरसूदन देवदेव ब्रह्मण्यदेव गरुडध्वज शंखपाणे । त्र्यक्षोरगाभरण बालमृगांकमौले त्याज्या भटा य० ॥ ६ ॥ श्रीराम राघव रमेश्वर रावणारे भूतेश मन्मथरिपो प्रमथाधिनाथ । चाणूरमर्दन हृषीकपते मुरारे त्याज्या भटा० ॥ ७ ॥ शूलिन्गिरीश

रजनीशकलावतंस कंसप्रणाशन सनातन केशिनाश । भर्ग त्रिनेत्र भव भूतपते पुरारे त्याज्या भटा० ॥ ८ ॥ गोपीपते यदुपते वसुदेवसूनो कर्पूरगौर वृषभध्वज भालनेत्र । गोवर्धनोद्धरण धर्मधुरीण गोप त्याज्या भटा० ॥ ९ ॥ स्थाणो त्रिलोचन पिनाकधर स्मरारे कृष्णानिरुद्ध कमलाकर कल्मषारे । विश्वेश्वर त्रिपथगार्द्रजटाकलाप त्याज्या० ॥ १० ॥ अष्टोत्तराधिकशतेन सुचारुनाम्नां संदर्भितां ललितरत्नकदंबकेन । सन्नायकां दृढगुणां निजकंठगां यः कुर्यादिमां स्रजमहो स यमं न पश्येत् ॥ ११ ॥ गणावूचतुः ॥ इत्थं द्विजेंद्र निजभृत्यगणान्सदैव संशिक्षयेदवनिगान्स हि धर्मराजः । अन्येऽपि ये हरिहरांकधरा धरायां ते दूरतः पुनरहो परिवर्जनीयाः ॥ १२ ॥ अगस्त्य उवाच ॥ यो धर्मराजरचितां ललितप्रबंधां नामावलिं सकलकल्मषबीजहंत्रीम् । धीरोऽत्र कौस्तुभभृतः शशिभूषणस्य नित्यं जपेत्स्तनरसं न पिबेत्स मातुः ॥ १३ ॥ इति शृण्वन्कथां रम्यां शिवशर्मा प्रियेऽनघाम् । प्रहर्षवक्त्रः पुरतो ददर्शाप्सरसां पुरीम् ॥ १४ ॥ इति श्रीस्कंदपुराणे काशीखंडे धर्मराजविरचितं हरिहराष्टोत्तरस्तोत्रं संपूर्णम् ॥

## ४१८. श्रीनृसिंहसरस्वतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कोट्यर्भकं कोटिसुचंद्रशांतं विश्वाश्रयं देवगणार्चितांघ्रिम् । भक्तप्रियं त्वाऽत्रिसुतं वरेण्यं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ १ ॥ मायातमोऽर्कं विगुणं गुणाढ्यं श्रीवल्लभं स्वीकृतभिक्षुवेषम् । सद्भक्तसेव्यं वरदं वरिष्ठं वंदे० ॥ २ ॥ कामादिषण्मत्तगजांकुशं त्वामानन्दकंदं परतत्त्वरूपम् । सद्धर्मगुप्त्यै विधृतावतारं वंदे० ॥ ३ ॥ सूर्येन्दुगुं सज्जनकामधेनुं मृषोद्यपंचात्म-

कविश्वमस्मात् । उदेति यस्मिन्नमतेऽस्तमेति वंदे० ॥ ४ ॥ रक्ताब्जपत्रायतकांतनेत्रं सदंडकुंडीपरिहापिताघम् । श्रितस्मितज्योत्स्नमुखेंदुशोभं वंदे० ॥ ५ ॥ नित्यं त्रयीमृग्यपदाब्जधूलिं निनादसद्बिन्दुकलास्वरूपम् । त्रितापतप्ताश्रितकल्पवृक्षं वंदे० ॥ ६ ॥ दैन्याधिभीकष्टदवाग्निमीड्यं योगाष्टकज्ञानसमर्पणोक्तम् । कृष्णानदीपंचसरिद्द्युतिस्थं वंदे० ॥ ७ ॥ अनादिमध्यांतमनंतशक्तिमतर्क्यभावं परमात्मसंज्ञम् । व्यतीतवाग्घृत्पथमद्वितीयं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ ८ ॥ इति श्रीमद्वासुदेवानंदसरस्वतीविरचितं नृसिंहसरस्वतीस्तोत्रं संपूर्णम् ॥

## ४१९. शिवरामाष्टकम् ।

श्रीगणेशाय नमः ॥ शिव हरे शिव रामसखे प्रभो त्रिविधतापनिवारण हे विभो । अज जनेश्वर यादव पाहि मां शिव हरे विजयं कुरु मे वरम् ॥ १ ॥ कमललोचन राम दयानिधे हर गुरो गजरक्षक गोपते । शिवतनो भव शंकर पाहि मां शिव हरे विजयं० ॥ २ ॥ स्वजनरंजन मंगलमंदिरं भजति ते पुरुषं परमं पदम् । भवति तस्य सुखं परमद्भुतं शिवहरे वि० ॥ ३ ॥ जय युधिष्ठिरवल्लभ भूपते जय जयार्जित पुण्यपयोनिधे । जय कृपामय कृष्ण नमोऽस्तु ते शिव हरे विजयं० ॥ ४ ॥ भवविमोचन माधव मापते सुकविमानसहंस शिवारते । जनकजारत राघव रक्ष मां शिव हरे विजयं० ॥ ५ ॥ अवनिमंडलमंगल मापते जलदसुंदर राम रमापते । निगमकीर्ति गुणार्णव गोपते शिव हरे विजयं० ॥ ६ ॥ पतितपावन नाममयी लता तव यशो विमलं परिगीयते । तदपि माधव मां किमुपेक्षसे शिव हरे विजयं० ॥ ७ ॥ अमरतापरदेव रमापते विजयत-

स्तव नामघनोपमा । मयि कथं करुणार्णव जायते शिव ह० ॥ ८ ॥ हनुमतःप्रिय चापकर प्रभो सुरसरिद्धृतशेखर हे गुरो । मम विभो किमु विस्मरणं कृतं शिव ह० ॥ ९ ॥ नरहरेरतिरंजनसुंदरं पठति यः शिवरामकृतस्तवम् । विशति रामरमाचरणांबुजे शिव ह० ॥ १० ॥ प्रातरुत्थाय यो भक्त्या पठेदेकाग्रमानसः । विजयो जायते तस्य विष्णुमाराध्यमाप्नुयात् ॥ ११ ॥ इति श्रीरामानंदविरचितं शिवरामस्तोत्रं संपूर्णम् ॥

## ४२०. प्रश्नोत्तररत्नमालिका ।

श्रीगणेशाय नमः ॥ कः खलु नालंक्रियते दृष्टादृष्टार्थसाधनपटीयान् । अनया कंठस्थितया प्रश्नोत्तररत्नमालिकया ॥ १ ॥ भगवन्किमुपादेयं गुरुवचनं हेयमपि च किमकार्यम् । को गुरुरधिगततत्त्वः सत्त्वहितायोद्यतः सततम् ॥ २ ॥ त्वरितं किं कर्तव्यं सुधिया संसारसंततिच्छेदः । किं मोक्षतरोर्बीजं सम्यग्ज्ञानं क्रियासिद्धम् ॥ ३ ॥ कः पथ्यतरो धर्मः कः शुचिरिह यस्य मानसं शुद्धम् । कः पंडितो विवेकी किं विषमवधीरणा गुरुषु ॥ ४ ॥ किं संसारे सारं बहुशो विचिंत्यमानमिदमेव । किं मनुजेष्विष्टतमं स्वपरहितायोद्यतं जन्म ॥ ५ ॥ मदिरेव मोहजनकः कः स्नेहः के च दस्यवो विषयाः । का भववल्ली तृष्णा को वैरी यस्त्वनुद्योगः ॥६॥ कस्माद्भयमिह मरणादीशादिह को विशिष्यतेऽरागी । कः शूरो यो ललनालोचनबाणैर्न च व्यथितः ॥ ७ ॥ पातुं कर्णांजलिभिः किममृतमिव युज्यते सदुपदेशः । किं गुरुताया मूलं यदेतदप्रार्थनं नाम ॥ ८ ॥ किं गहनं स्त्रीचरितं कश्चतुरो यो न खंडितस्तेन । किं दारिद्र्यमसंतोषः किं लाघवमधमतो याच्ञा ॥ ९ ॥ किं जीवित-

मनवद्यं किं जाड्यं पाठतोऽप्यनभ्यासः । को जागर्ति विवेकी का निद्रा मूढता जंतोः ॥ १० ॥ नलिनीदलगतजलवत्तरलं किं यौवनं धनं चायुः । कथय पुनः के शशिनः किरणसमाः सज्जना एव ॥ ११ ॥ को नरकः परवशता किं सौख्यं सर्वसंगविरतिर्या । किं साध्यं भूतहितं च प्रियं किं प्राणिनामसवः ॥ १२ ॥ किं दानमनाकांक्षं किं मित्रं यन्निवर्तयति पापात् ॥ १३ ॥ कोऽलंकारः शीलं किं वाचां मंडनं सत्यम् । किमनर्थफलं मानः सुसंगतिः का सुखावहा मैत्री ॥ १४ ॥ सर्वव्यसनविनाशे को दक्षः सर्वथा परित्यागी । कोंऽधो योऽकार्यरतः को बधिरो यः शृणोति न हितानि ॥ १५ ॥ को मूको यः काले प्रियाणि वक्तुं न जानाति । किं मरणं मूर्खत्वं किमनर्घ्यं दत्तमवसरे यच्च ॥ १६ ॥ आमरणात्किं शल्यं प्रच्छन्नं यत्कृतं पापम् । कुत्र विधेयो यत्नो विद्याभ्यासो सदौषधे दाने ॥ १७ ॥ अवधीरणा क्व कार्या खलपरयोषित्परधनेषु । काऽहर्निशमनुचिंत्या संसारासारता न तु प्रमदा ॥ १८ ॥ का प्रेयसी विधेया करुणा दीनेषु सज्जने मैत्री । कंठगतैरप्यसुभिः कस्यात्मा न वशमुपयाति ॥ १९ ॥ मूर्खस्य विषादवतो गर्ववतोऽपि च कृतघ्नस्य । कः पूज्यः सद्वृत्तः कमधममाचक्षते चलितवृत्तम् ॥ २० ॥ केन जितं जगदेतत्सत्यतितिक्षावता पुंसा । कुत्र विधेयो वासः सज्जननिकटेऽथ वा काश्याम् ॥ २१ ॥ कस्मै नमस्क्रिया स्याद्देवानामपि दया प्रधानस्य । कस्मादुद्वेजितव्यं संसारारण्यतः सुधिया ॥ २२ ॥ कस्य वशे प्राणिगणः सत्यप्रियभाषिणो विनतस्य । क्व स्थातव्यं न्याय्ये पथि दृष्टार्थलाभाय ॥ २३ ॥ विद्युद्विलसितचपलं किं दुर्जनसंगतिर्युवतयश्च । कुलशीलनिष्प्रकंपाः के कलिकालेऽपि ससज्जना एव ॥ २४ ॥ किं शोच्यं कार्पण्यं सति विभवे किं प्रशस्तमौदार्यम् । तनुतर-

विभवस्य प्रभविष्णोर्वा किं यत्सहिष्णुत्वम् ॥ २५ ॥ चिंतामणिरिव दुर्लभमिह किं कथयामि चतुर्भद्रम् । किं तद्वदेति भूयो विधूततमसो विशेषेण ॥ २६ ॥ दानं प्रिय वाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् । वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्भद्रम् ॥ २७ ॥ इत्येषा कंठगता प्रश्नोत्तररत्नमालिका येषाम् । ते मुक्ताभरणा इव विमलाश्चाभान्ति सत्समाजेषु ॥ २८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचिता प्रश्नोत्तररत्नमालिका संपूर्णा ॥

## ४२१. भगवत्प्रातःस्मरणम् ।

श्रीगणेशाय नमः ॥ प्रातः स्मरामि फणिराजतनौ शयानं नागामरासुरनरादिजगन्निदानम् । वेदैः सहागमगणैरुपगीयमानं कांतारकेतनवतां परमं निधानम् ॥ १ ॥ प्रातर्भजामि भवसागरवारिपारं देवर्षिसिद्धनिवहैर्विहितोपहारम् । संदृप्तदानवकदंबमदापहारं सौंदर्यराशिजलराशिसुताविहारम् ॥ २ ॥ प्रातर्नमामि शरदंबरकांतिकांतं पादारविंदमकरंदजुषां भवांतम् । नानावतारहृतभूमिभरं कृतांतं पाथोजकंबुरथ पादकरं प्रशांतम् ॥ ३ ॥ श्लोकत्रयमिदं पुण्यं ब्रह्मानंदेन कीर्तितम् । यः पठेत्प्रातरुत्थाय सर्वपापैः प्रमुच्यते ॥ ४ ॥ इति श्रीमत्परमहंसब्रह्मानंदस्वामिविरचितं श्रीभगवत्प्रातःस्मरणं संपूर्णम् ॥

## ४२२. प्रातःस्मरणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं सच्चित्सुखं परमहंसगतिं तुरीयम् । यत्स्वप्नजागरसुषुप्तमवैति नित्यं तद्ब्रह्म निष्कलमहं न च भूतसंघः ॥ १ ॥ प्रातर्भजामि मनसो वचसामगम्यं वाचो विभांति निखिला यदनुग्रहेण । यं नेतिनेतिवचनै-

र्निगमा अवोचुस्तं देवदेवमजमच्युतमाहुरग्र्यम् ॥ २ ॥ प्रातर्नमामि तमसः परमर्कवर्णं पूर्णं सनातनपदं पुरुषोत्तमाख्यम् । यस्मिन्निदं जगदशेषमशेषमूर्तौ रज्जौ भुजंगम इव प्रतिभासितं वै ॥ ३ ॥ श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम् । प्रातःकाले पठेद्यस्तु स गच्छेत्परमं पदम् ॥ ४ ॥ इति श्रीमद्भगवत्पादाचार्यविरचितं प्रातःस्मरणस्तोत्रं संपूर्णम् ॥

## ४२३. अश्वत्थस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीनारद उवाच ॥ अनायासेन लोकोऽयं सर्वान्कामानवाप्नुयात् । सर्वदेवात्मकं चैकं तन्मे ब्रूहि पितामह ॥ १ ॥ ब्रह्मोवाच ॥ शृणु देवमुनेऽश्वत्थं शुद्धं सर्वात्मकं तरुम् । यत्प्रदक्षिणतो लोकः सर्वान्कामान्समश्नुते ॥ २ ॥ अश्वत्थाद्दक्षिणे रुद्रः पश्चिमे विष्णुरास्थितः । ब्रह्मा चोत्तरदेशस्थः पूर्वे त्विंद्रादिदेवताः ॥ ३ ॥ स्कंधोपस्कंधपत्रेषु गोविप्रमुनयस्तथा । मूलं वेदाः पयो यज्ञाः संस्थिता मुनिपुंगव ॥ ४ ॥ पूर्वादिदिक्षु संयाता नदीनदसरोब्धयः । तस्मात्सर्वप्रयत्नेन ह्यश्वत्थं संश्रयेद्बुधः ॥ ५ ॥ त्वं क्षीर्यफलकश्चैव शीतलश्च वनस्पते । त्वामाराध्य नरो विंद्यादैहिकामुष्मिकं फलम् ॥ ६ ॥ चलद्दलाय वृक्षाय सर्वदाश्रितविष्णवे । बोधितत्त्वाय देवाय ह्यश्वत्थाय नमो नमः ॥ ७ ॥ अश्वत्थ यस्मात्त्वयि वृक्षराज नारायणस्तिष्ठति सर्वकाले । अतः श्रुतस्त्वं सततं तरूणां धन्योऽसि चारिष्टविनाशकोऽसि ॥ ८ ॥ क्षीरदस्त्वं च येनेह येन श्रीस्त्वां निषेवते । सत्येन तेन वृक्षेंद्र मामपि श्रीर्निषेवताम् ॥ ९ ॥ एकादशात्मरुद्रोऽसि वसुनाथशिरोमणिः । नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल ॥ १० ॥ अग्निगर्भः शमीगर्भो देवगर्भः प्रजापतिः । हिरण्यगर्भो भूगर्भो

यज्ञगर्भो नमोऽस्तु ते ॥ ११ ॥ आयुर्बलं यशो वर्चः प्रजाः पशु-
वसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ १२ ॥
सततं वरुणो रक्षेत्त्वामाराद्वृष्टिराश्रयेत् । परितस्त्वां निषेवंतां तृणानि
सुखमस्तु ते ॥ १३ ॥ अक्षिस्पंदं भुजस्पंदं दुःस्वप्नं दुर्विचिंतनम् ।
शत्रूणां च समुत्थानं ह्यश्वत्थ शमय प्रभो ॥ १४ ॥ अश्वत्थाय
वरेण्याय सर्वैश्वर्यप्रदायिने । नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने
॥ १५ ॥ मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे । अंततः शिव-
रूपाय वृक्षराजाय ते नमः ॥ १६ ॥ यं दृष्ट्वा मुच्यते रोगैः स्पृष्ट्वा
पापैः प्रमुच्यते । यदाश्रयाच्चिरंजीवी तमश्वत्थं नमाम्यहम् ॥ १७ ॥
अश्वत्थ सुमहाभाग सुभग प्रियदर्शन । इष्टकामांश्च मे देहि
शत्रुभ्यश्चापराभवम् ॥ १८ ॥ आयुः प्रजां धनं धान्यं सौभाग्यं
सर्वसंपदम् । देहि देव महावृक्ष त्वामहं शरणं गतः ॥ १९ ॥
ऋग्यजुःसाममंत्रात्मा सर्वरूपी परात्परः । अश्वत्थो वेदमूलोऽसा-
वृषिभिः प्रोच्यते सदा ॥ २० ॥ ब्रह्महा गुरुहा चैव दरिद्रो
व्याधिपीडितः । आवृत्य लक्षसंख्यं तत्स्तोत्रमेतत्सुखी भवेत्
॥ २१ ॥ ब्रह्मचारी हविष्याशी त्वधःशायी जितेंद्रियः । पापोपह-
तचित्तोऽपि व्रतमेतत्समाचरेत् ॥ २२ ॥ एकहस्तं द्विहस्तं वा
कुर्याद्गोमयलेपनम् । अर्चेत्पुरुषसूक्तेन प्रणवेन विशेषतः ॥ २३ ॥
मौनी प्रदक्षिणं कुर्यात्प्रागुक्तफलभाग्भवेत् । विष्णोर्नामसहस्रेण
ह्यच्युतस्यापि कीर्तनात् ॥ २४ ॥ पदे पदांतरं गत्वा करचेष्टावि-
वर्जितः । वाचा स्तोत्रं मनो ध्याने चतुरंगं प्रदक्षिणम् ॥ २५ ॥
अश्वत्थः स्थापितो येन तत्कुलं स्थापितं ततः । धनायुषां समृद्धिस्तु
नरकात्तारयेत्पितॄन् ॥ २६ ॥ अश्वत्थमूलमाश्रित्य शाकान्नोदक-
दानतः । एकस्मिन्भोजिते विप्रे कोटिब्राह्मणभोजनम् ॥ २७ ॥

अश्वत्थमूलमाश्रित्य जपहोमसुरार्चनात् । अक्षयं फलमाप्नोति ब्रह्मणो वचनं तथा ॥ २८ ॥ एवमाश्वासितोऽश्वत्थः सदाश्वासाय कल्पते । यज्ञार्थं छेदितेऽश्वत्थे ह्यक्षयं स्वर्गमाप्नुयात् ॥ २९ ॥ छिन्नो येन वृथाऽश्वत्थश्छेदिताः पितृदेवताः । अश्वत्थः पूजितो यत्र पूजिताः सर्वदेवताः ॥ ३० ॥ इति ब्रह्मनारदसंवादेऽश्वत्थस्तोत्रं संपूर्णम् ॥

## ४२४. नवनागनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अनंतं वासुकिं शेषं पद्मनाभं च कंबलम् । शंखपालं धृतराष्ट्रं तक्षकं कालियं तथा ॥ १ ॥ एतानि नव नामानि नागानां च महात्मनाम् । सायंकाले पठेन्नित्यं प्रातःकाले विशेषतः । तस्य विषभयं नास्ति सर्वत्र विजयी भवेत् ॥ २ ॥ इति श्रीनवनागनामस्तोत्रं संपूर्णम् ॥

## ४२५. तुलसीकवचम् ।

श्रीगणेशाय नम ॥ अस्या श्रीतुलसीकवचस्तोत्रमंत्रस्य, श्रीमहादेव ऋषिः, अनुष्टुप्छंदः, श्रीतुलसी देवता, मनसीप्सितकामनासिद्ध्यर्थं जपे विनियोगः ॥ तुलसि श्रीमहादेवि नमः पंकजधारिणि । शिरो मे तुलसी पातु भालं पातु यशस्विनी ॥ १ ॥ दृशौ मे पद्मनयना श्रीसखी श्रवणे मम । घ्राणं पातु सुगंधा मे मुखं च सुमुखी मम ॥ २ ॥ जिह्वां मे पातु शुभदा कंठं विद्यामयी मम । स्कंधौ कह्लारिणी पातु हृदयं विष्णुवल्लभा ॥ ३ ॥ मध्यं मे पुण्यदा पातु नाभिं सौभाग्यदायिनी । कटिं कुंडलिनी पातु ऊरू नारदवंदिता ॥ ४ ॥ जननी जानुनी पातु जंघे सकलवंदिता । नारायणप्रिया पादौ सर्वांगं सर्वरक्षिणी ॥ ५ ॥ संकटे विषमे दुर्गे भये वादे महाहवे । नित्यं हि संध्ययोः पातु तुलसी सर्वतः सदा ॥ ६ ॥ इतीदं परमं गुह्यं तुलस्याः कवचामृतम् । मर्त्यानाममृतार्थाय

भीतानामभयाय च ॥ ७ ॥ मोक्षाय च मुमुक्षूणां ध्यायिनां ध्यानयोगकृत् । वशाय वश्यकामानां विद्यायै वेदवादिनाम् ॥ ८ ॥ द्रविणाय दरिद्राणां पापिनां पापशांतये ॥ ९ ॥ अन्नाय क्षुधितानां च स्वर्गाय स्वर्गमिच्छताम् । पशव्यं पशुकामानां पुत्रदं पुत्रकांक्षिणाम् ॥ १० ॥ राज्याय भ्रष्टराज्यानामशांतानां च शांतये । भक्त्यर्थं विष्णुभक्तानां विष्णौ सर्वांतरात्मनि ॥ ११ ॥ जाप्यं त्रिवर्गसिद्ध्यर्थं गृहस्थेन विशेषतः । उद्यंतं चंडकिरणमुपस्थाय कृतांजलिः ॥ १२ ॥ तुलसीकानने तिष्ठन्नासीनो वा जपेदिदम् । सर्वान्कामानवाप्नोति तथैव मम सन्निधिम् ॥ १३ ॥ मम प्रियकरं नित्यं हरिभक्तिविवर्धनम् । या स्यान्मृतप्रजा नारी तस्या अंगं प्रमार्जयेत् ॥ १४ ॥ सा पुत्रं लभते दीर्घजीविनं चाप्यरोगिणम् । वंध्याया मार्जयेदंगं कुशैर्मंत्रेण साधकः ॥ १५ ॥ सापि संवत्सरादेव गर्भं धत्ते मनोहरम् । अश्वत्थे राजवश्यार्थी जपेदग्नेः सुरूपभाक् ॥ १६ ॥ पलाशमूले विद्यार्थी तेजोर्थ्यभिमुखो रवेः । कन्यार्थी चंडिकागेहे शत्रुहत्यै गृहे मम ॥ १७ ॥ श्रीकामो विष्णुगेहे च उद्याने स्त्री वशा भवेत् । किमत्र बहुनोक्तेन शृणु सैन्येश तत्त्वतः ॥ १८ ॥ यं यं काममभिध्यायेत्तं तं प्राप्नोत्यसंशयम् । मम गेहगतस्त्वं तु तारकस्य वधेच्छया ॥ १९ ॥ जपन् स्तोत्रं च कवचं तुलसीगतमानसः । मंडलात्तारकं हंता भविष्यति न संशयः ॥ २० ॥ इति श्रीब्रह्मांडपुराणे तुलसीमाहात्म्ये तुलसीकवचं संपूर्णम् ॥

## ४२६. तुलसीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ जगद्धात्रि नमस्तुभ्यं विष्णोश्च प्रियवल्लभे । यतो ब्रह्मादयो देवाः सृष्टिस्थित्यंतकारिणः ॥ १ ॥ नमस्तुलसि

कल्याणि नमो विष्णुप्रिये शुभे । नमो मोक्षप्रदे देवि नमः संपत्प्रदायिके ॥ २ ॥ तुलसी पातु मां नित्यं सर्वापद्भ्योऽपि सर्वदा । कीर्तितापि स्मृता वापि पवित्रयति मानवम् ॥ ३ ॥ नमामि शिरसा देवीं तुलसीं विलसत्तनुम् । यां दृष्ट्वा पापिनो मर्त्या मुच्यंते सर्वकिल्बिषात् ॥ ४ ॥ तुलस्या रक्षितं सर्वं जगदेतच्चराचरम् । या विनिहंति पापानि दृष्टा वा पापिभिर्नरैः ॥ ५ ॥ नमस्तुलस्यतितरां यस्यै बद्ध्वा बलिं कलौ । कलयंति सुखं सर्वं स्त्रियो वैश्यास्तथापरे ॥ ६ ॥ तुलस्या नापरं किंचिद्दैवतं जगतीतले । यथा पवित्रितो लोको विष्णुसंगेन वैष्णवः ॥ ७ ॥ तुलस्याः पल्लवं विष्णोः शिरस्यारोपितं कलौ । आरोपयति सर्वाणि श्रेयांसि वरमस्तके ॥ ८ ॥ तुलस्यां सकला देवा वसंति सततं यतः । अतस्तामर्चयेल्लोके सर्वान्देवान्समर्चयन् ॥ ९ ॥ नमस्तुलसि सर्वज्ञे पुरुषोत्तमवल्लभे । पाहि मां सर्वपापेभ्यः सर्वसंपत्प्रदायिके ॥ १० ॥ इति स्तोत्रं पुरा गीतं पुंडरीकेण धीमता । विष्णुमर्चयता नित्यं शोभनैस्तुलसीदलैः ॥ ११ ॥ तुलसी श्रीमहालक्ष्मीर्विद्याविद्या यशस्विनी । धर्म्या धर्मानना देवी देवदेवमनःप्रिया ॥ १२ ॥ लक्ष्मीः प्रियसखी देवी द्यौर्भूमिरचला चला । षोडशैतानि नामानि तुलस्याः कीर्तयन्नरः ॥ १३ ॥ लभते सुतरां भक्तिमंते विष्णुपदं लभेत् । तुलसी भूर्महालक्ष्मीः पद्मिनी श्रीहरिप्रिया ॥ १४ ॥ तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे । नमस्ते नारदनुते नारायणमनःप्रिये ॥ १५ ॥ इति श्रीपुंडरीककृतं तुलसीस्तोत्रं संपूर्णम् ॥

## ४२७. वेदव्यासाष्टकम् ।

श्रीगणेशाय नमः ॥ कलिमलास्तविवेकदिवाकरं समवलोक्य तमो-

वलितं जनम् । करुणया भुवि दर्शितविग्रहं मुनिवरं तमहं सततं भजे ॥ १ ॥ भरतवंशसमुद्धरणेच्छया स्वजननीवचसा परिचोदितः । अजनयत्तनयत्रितयं प्रभुर्मुनिवरं तमहं सततं भजे ॥ २ ॥ मतिबलादि निरीक्ष्य कलौ नृणां लघुतरं कृपया निगमांबुधेः । समकरोदिह भागमनेकधा मुनिवरं तमहं सततं भजे ॥ ३ ॥ सकलधर्मनिरूपणसागरं विविधचित्रकथासमलंकृतम् । व्यरचयच्च पुराणकदंबकं मुनिवरं तमहं सततं भजे ॥ ४ ॥ श्रुतिविरोधसमन्वयदर्पणं निखिलवादिमतांध्यविदारणम् । ग्रथितवानपि सूत्रसमूहकं मुनिवरं तमहं सततं भजे ॥ ५ ॥ यदनुभाववशेन दिवं गतः समधिगम्य महास्त्रसमुच्चयम् । कुरुचमूमजयद्विजयो द्रुतं मुनिवरं तमहं सततं भजे ॥ ६ ॥ समरवृत्तविबोधसमीहया कुरुवरेण मुदा कृतयाचनः । सपदि सूतमदादमलेक्षणं मुनिवरं तमहं सततं भजे ॥ ७ ॥ वननिवासपरौ कुरुदंपती सुतशुचा तपसा च विकर्शितौ । मृततनूजगणं समदर्शयन्मुनिवरं तमहं सततं भजे ॥ ८ ॥ व्यासाष्टकमिदं पुण्यं ब्रह्मानन्देन निर्मितम् । यः पठेन्मनुजो नित्यं स भवेच्छास्त्रपारगः ॥ ९ ॥ इति श्रीमत्परमहंसब्रह्मानंदस्वामिविरचितं वेदव्यासाष्टकं संपूर्णम् ॥

## ४२८. अभिलाषाष्टकम् ।

श्रीगणेशाय नमः ॥ कदा पक्षींद्रांसोपरिगतमजं कंजनयनं रमासंश्लिष्टांगं गगनरुचमापीतवसनम् । गदाशंखांभोजारिवरकरमालोक्य सुचिरं गमिष्यत्येतन्मे ननु सफलतां नेत्रयुगलम् ॥ १ ॥ कदा क्षीराब्ध्यंतः सुरतरुवनांतर्मणिमये समासीनं पीठे जलधितनयालिंगिततनुम् । स्तुतं देवैर्नित्यं मुनिवरकदंबैरभिनुतं स्तवैः संस्तोष्यामि श्रुतिवचनगर्भैः सुरगुरुम् ॥ २ ॥ कदा मामाभीतं

भयजलधितस्तापसतनुं गता रागं गंगातटगिरिगुहावाससहनम् ।
लपंतं हे विष्णो सुरवर रमेशेति सततं समभ्येत्योदारं कमलनयनो
वक्ष्यति वचः ॥ ३ ॥ कदा मे हृत्पद्मे भ्रमर इव पद्मे प्रतिवसन्
सदा ध्यानाभ्यासादनिशमुपहूतो विभुरसौ । स्फुरज्ज्योतीरूपो
रविरिव रमासेव्यचरणो हरिष्यत्यज्ञानाज्जनिततिमिरं तूर्णमखिलम्
॥ ४ ॥ कदा मे भोगाशानिबिडभवपाशादुपरतं तपःशुद्धं बुद्धं
गुरुवचनतोदैरचपलम् । मनो मौनं कृत्वा हरिचरणयोश्चारु सुचिरं
स्थितिं स्थाणुप्रायां भवभयहरां यास्यति पराम् ॥ ५ ॥ कदा मे
संरुद्धाखिलकरणजालस्य परितो जिताशेषप्राणानिलपरिकरस्य
प्रजपतः । सदोंकारं चित्तं हरिपदसरोजे धृतवतः समेष्यत्युल्लासं
मुहुरखिलरोमावलिरियम् ॥ ६ ॥ कदा प्रारब्धांते परिशिथिलतां
गच्छति शनैः शरीरे चाक्षौघेऽप्युपरतवति प्राणपवने । वदत्यूर्ध्वं
शश्वन्मम वदनकंजे मुहुरहो करिष्यत्यावासं हरिरिति पदं पावन-
तमम् ॥ ७ ॥ कदा हित्वा जीर्णां त्वचमिव भुजंगस्तनुमिमां
चतुर्बाहुश्चक्रांबुजदरकरः पीतवसनः । घनश्यामो दूतैर्गगनगतिनीतो
नतिपरैर्गमिष्यामीशस्यांतिकमखिलदुःखांतकमिति ॥ ८ ॥ इति
श्रीमत्परमहंसब्रह्मानंदस्वामिविरचितमभिलाषाष्टकं संपूर्णम् ॥

## ४२९. श्रीहरिशरणाष्टकम् ।

श्रीगणेशाय नमः ॥ ध्येयं वदंति शिवमेव हि केचिदन्ये शक्तिं
गणेशमपरे तु दिवाकरं वै । रूपैस्तु तैरपि त्रिभासि यतस्त्वमेव
तस्मात्त्वमेव शरणं मम शंखपाणे ॥ १ ॥ नो सोदरो न जनको
जननी न जाया नैवात्मजो न च कुलं विपुलं बलं वा । संदृश्यते
न किल कोऽपि सहायको मे तस्मात्त्वमेव शरणं मम शंखपाणे
॥ २ ॥ नोपासिता मदमपास्य मया महांतस्तीर्थानि चास्तिकधिया

नहि सेवितानि । देवार्चनं च विधिवन्न कृतं कदापि तस्मात्त्वमेव शरणं मम शंखपाणे ॥ ३ ॥ दुर्वासना मम सदा परिकर्षयंती चित्तं शरीरमपि रोगगणा दहंति । संजीवनं च परहस्तगतं सदैव तस्मात्त्वमेव शरणं मम शंखपाणे ॥ ४ ॥ पूर्वं कृतानि दुरितानि मया तु यानि स्मृत्वाऽखिलानि हृदयं परिकंपते मे । ख्याता च ते पतितपावनता तु यस्मात्तस्मात्त्वमेव शरणं मम शंखपाणे ॥ ५ ॥ दुःखं जराजननजं विविधाश्च रोगाः काकश्वशूकरजनीर्निरये च पातः । ते विस्मृते फलमिदं विततं हि लोके तस्मात्त्वमेव शरणं मम शंखपाणे ॥ ६ ॥ नीचोऽपि पापवलितोऽपि विनिंदितोऽपि ब्रूयात्तवाहमिति यस्तु किलैकवारम् । तं यच्छसीश निजलोकमिति व्रतं ते तस्मात्त्वमेव शरणं मम शंखपाणे ॥ ७ ॥ वेदेषु धर्मवचनेषु तथागमेषु रामायणेऽपि च पुराणकदंबके वा । सर्वत्र सर्वविधिना गदितस्त्वमेव तस्मात्त्वमेव शरणं मम शंखपाणे ॥ ८ ॥ इति श्रीपरमहंसब्रह्मानंदस्वामिविरचितं श्रीहरिशरणाष्टकं संपूर्णम् ॥

## ४३०. चतुःश्लोकीभागवतम् ।

श्रीगणेशाय नमः ॥ श्रीभगवानुवाच । ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् । सरहस्यं तदंगं च गृहाण गदितं मया ॥ १ ॥ यावानहं यथाभावो यद्रूपगुणकर्मकः । तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ २ ॥ अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् । पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३ ॥ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथाभासो यथा तमः ॥ ४ ॥ यथा महांति भूतानि भूतेषूच्चावचेष्वनु । प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ ५ ॥ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः । अन्वयव्यतिरेकाभ्यां यत्स्या-

त्सर्वत्र सर्वदा ॥ ६ ॥ एतन्मतं समातिष्ठ परमेण समाधिना। भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ ७ ॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां द्वितीयस्कंधे भगवद्ब्रह्मसंवादे चतुःश्लोकीभागवतं संपूर्णम् ॥

## ४३१. सप्तश्लोकी गीता।

श्रीगणेशाय नमः ॥ ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्। यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १ ॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशो द्रवंति सर्वे नमस्यंति च सिद्धसंघाः ॥ २ ॥ सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ३ ॥ कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः। सर्वस्य धातारमचिंत्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ४ ॥ ऊर्ध्वमूल-मधःशाखमश्वत्थं प्राहुरव्ययम्। छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ५ ॥ सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञान-मपोहनं च। वेदैश्च सर्वैरहमेव वेद्यो वेदांतकृद्वेदविदेव चाहम् ॥ ६ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वै-वमात्मानं मत्परायणः ॥ ७ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सप्तश्लोकी गीता संपूर्णा ॥

## ४३२. सुदर्शनस्तोत्रम्।

श्रीगणेशाय नमः ॥ अम्बरीष उवाच ॥ त्वमग्निर्भगवान्सूर्यस्त्वं सोमो ज्योतिषां पतिः। त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥ १ ॥ सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय। सर्वास्त्रघाति-न्विप्राय स्वस्ति भूया इडस्पते ॥ २ ॥ त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक् त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं

परम् ॥३॥ नमः सुनाभाखिलधर्मसेतवे ह्यधर्मशीलासुरधूमकेतवे । त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे ॥ ४ ॥ त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च धृतो महात्मनाम् । दुरत्ययस्ते महिमा गिरां पते त्वद्रूपमेतत्सदसत्परावरम् ॥ ५ ॥ यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रविष्टोऽजित दैत्यदानवम् । बाहूदरोर्वङ्घ्रिशिरोधराणि वृक्णन्नजस्रं प्रधने विराजसे ॥ ६ ॥ स त्वं जगत्राणखलप्रहाणये निरूपितः सर्वसहो गदाभृता । विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥ ७ ॥ यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः । कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः ॥ ८ ॥ यदि नो भगवान्प्रीत एकः सर्वगुणाश्रयः । सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ९ ॥ इत्यंबरीषकृतं सुदर्शनस्तोत्रं संपूर्णम् ॥

## ४३३. भारतसावित्रीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ व्यास उवाच ॥ मातापितृसहस्राणि पुत्रदारशतानि च । संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥ १ ॥ हर्षस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ २ ॥ ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे । धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥ ३ ॥ न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः । नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ४ ॥ इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् । स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥ ५ ॥ इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्वर्गारोहणपर्वणि भारतसावित्रीस्तोत्रं संपूर्णम् ॥

## ४३४. श्रीशङ्करदेशिकाष्टकम् ।

श्रीगणेशाय नमः ॥ विदिताखिलशास्त्रसुधाजलधे महितोपनिषत्कथितार्थनिधे । हृदये कलये विमलं चरणं भव शंकरदेशिक मे शरणम् ॥ १ ॥ करुणावरुणालय पालय मां भवसागरदुःखविदूनहृदम् । रचिताखिलदर्शनतत्त्वविदं भव शंकरदेशिक मे शरणम् ॥ २ ॥ भवता जनता सुखिता भविता निजबोधविचारणचारुमते । कलयेश्वरजीवविवेकविदं भव शंकरदेशिक मे शरणम् ॥ ३ ॥ भव एव भवानिति मे नितरां समजायत चेतसि कौतुकिता । मम वारय मोहमहाजलधिं भव शंकरदेशिक मे शरणम् ॥ ४ ॥ सुकृतेऽधिकृते बहुधा भवतो भविता पददर्शनलालसता । अतिदीनमिमं परिपालय मां भव शंकरदेशिक मे शरणम् ॥ ५ ॥ जगतीमवितुं कलिताकृतयो विचरन्ति महामहसश्छलतः । अहिमांशुरिवात्र विभासि पुरो भव शंकरदेशिक मे शरणम् ॥ ६ ॥ गुरुपुंगव पुंगवकेतन ते समतामयतां न हि कोऽपि सुधीः । शरणागतवत्सल तत्त्वनिधे भव शंकरदेशिक मे शरणम् ॥ ७ ॥ विदिता न मया विशदैककला न च किंचन काञ्चनमस्ति गुरो । द्रुतमेव विधेहि कृपां सहजां भव शंकरदेशिक मे शरणम् ॥ ८ ॥ इति श्रीशङ्करदेशिकाष्टकं संपूर्णम् ॥

## ४३५. मृतसंजीवनकवचम् ।

श्रीगणेशाय नमः ॥ सारात्सारतरं पुण्यं गुह्याद्गुह्यतरं शुभम् । महादेवस्य कवचं मृतसंजीवनाभिधम् ॥ १ ॥ समाहितमना भूत्वा श्रृणुष्व कवचं शुभम् । श्रुत्वैतद्दिव्यकवचं रहस्यं कुरु सर्वदा ॥ २ ॥ वराभयकरो यज्वा सर्वदेवनिषेवितः । मृत्युंजयो

महादेवः प्राच्यां मां पातु सर्वदा ॥ ३ ॥ दधानः शक्तिमभयां त्रिमुखः षड्भुजः प्रभुः । सदाशिवोऽग्निरूपी मामाग्नेय्यां पातु सर्वदा ॥ ४ ॥ अष्टादशभुजोपेतो दण्डाभयकरो विभुः । यमरूपी महादेवो दक्षिणस्यां सदाऽवतु ॥ ५ ॥ खड्गाभयकरो धीरो रक्षोगणनिषेवितः । रक्षोरूपी महेशो मां नैर्ऋत्यां सर्वदाऽवतु ॥ ६ ॥ पाशाभयभुजः सर्वरत्नाकरनिषेवितः । वरुणात्मा महादेवः पश्चिमे मां सदाऽवतु ॥ ७ ॥ गदाभयकरः प्राणनायकः सर्वदा गतिः । वायव्यां मारुतात्मा मां शंकरः पातु सर्वदा ॥ ८ ॥ शङ्खाभयकरस्थो मां नायकः परमेश्वरः । सर्वात्मान्तरदिग्भागे पातु मां शंकरः प्रभुः ॥ ९ ॥ शूलाभयकरः सर्वविद्यानामधिनायकः । ईशानात्मा तथैशान्यां पातु मां परमेश्वरः ॥ १० ॥ ऊर्ध्वभागे ब्रह्मरूपी विश्वात्माऽधः सदाऽवतु । शिरो मे शंकरः पातु ललाटं चन्द्रशेखरः ॥ ११ ॥ भ्रूमध्यं सर्वलोकेशस्त्रिनेत्रो लोचनेऽवतु । भ्रूयुग्मं गिरिशः पातु कर्णौ पातु महेश्वरः ॥ १२ ॥ नासिकां मे महादेव ओष्ठौ पातु वृषध्वजः । जिह्वां मे दक्षिणामूर्तिर्दन्तान्मे गिरिशोऽवतु ॥ १३ ॥ मृत्युंजयो मुखं पातु कण्ठं मे नागभूषणः । पिनाकी मत्करौ पातु त्रिशूली हृदयं मम ॥ १४ ॥ पञ्चवक्त्रः स्तनौ पातु उदरं जगदीश्वरः । नाभिं पातु विरूपाक्षः पार्श्वौ मे पार्वतीपतिः ॥ १५ ॥ कटिद्वयं गिरीशो मे पृष्ठं मे प्रमथाधिपः । गुह्यं महेश्वरः पातु ममोरू पातु भैरवः ॥ १६ ॥ जानुनी मे जगद्धर्ता जंघे मे जगदम्बिका । पादौ मे सततं पातु लोकवन्द्यः सदाशिवः ॥ १७ ॥ गिरीशः पातु मे भार्यां भवः पातु सुतान्मम । मृत्युंजयो ममायुष्यं चित्तं मे गणनायकः ॥ १८ ॥ सर्वांगं मे सदा पातु कालकालः सदाशिवः ।

एतत्ते कवचं पुण्यं देवतानां च दुर्लभम् ॥ १९ ॥ मृतसंजीवनं नाम्ना महादेवेन कीर्तितम् । सहस्रावर्तनं चास्य पुरश्चरणमीरितम् ॥ २० ॥ यः पठेच्छृणुयान्नित्यं श्रावयेत्सुसमाहितः । स कालमृत्युं निर्जित्य सदाऽऽयुष्यं समश्नुते ॥ २१ ॥ हस्तेन वा यदा स्पृष्ट्वा मृतं संजीवयत्यसौ । आधयो व्याधयस्तस्य न भवन्ति कदाचन ॥ २२ ॥ कालमृत्युमपि प्राप्तमसौ जयति सर्वदा । अणिमादिगुणैश्वर्यं लभते मानवोत्तमः ॥ २३ ॥ युद्धारम्भे पठित्वेदमष्टाविंशतिवारकम् । युद्धमध्ये स्थितः शत्रुः सद्यः सर्वैर्न दृश्यते ॥ २४ ॥ न ब्रह्मादीनि चास्त्राणि क्षयं कुर्वन्ति तस्य वै । विजयं लभते देवयुद्धमध्येऽपि सर्वदा ॥ २५ ॥ प्रातरुत्थाय सततं यः पठेत्कवचं शुभम् । अक्षयं लभते सौख्यमिह लोके परत्र च ॥ २६ ॥ सर्वव्याधिविनिर्मुक्तः सर्वरोगविवर्जितः । अजरामरणो भूत्वा सदा षोडशवार्षिकः ॥ २७ ॥ विचरत्यखिलाँल्लोकान्प्राप्य भोगांश्च दुर्लभान् । तस्मादिदं महागोप्यं कवचं समुदाहृतम् । मृतसंजीवनं नाम्ना दैवतैरपि दुर्लभम् ॥ २८ ॥ इति श्रीवसिष्ठविरचितं मृतसंजीवनकवचं संपूर्णम् ॥

## ४३६. नृसिंहसरस्वत्यष्टकम् ।

श्रीगणेशाय नमः ॥ प्राग्ब्रह्मत्वमजोऽक्रियोऽपि बहुलः स्यामित्यभूद्धीस्तया सृष्ट्वैवांडभुवं ततो जगदिदं सृष्टं सधर्मं गुणैः । स्वैः स्वं भो रमयन्विहंसि सदरीमत्रावतीर्यानिशं वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ १ ॥ कल्याकृष्टहृदुज्झितक्रतुनरत्रस्ताध्वराशीर्मुदे प्राप्तः सूर्य इवोदितोऽस्यज महामोहांधकारं ग्रसन् । सद्धर्माश्रमसेतुमत्र शिथिलप्रायं सुदार्ढ्यं नयन्वंदे श्रीनृहरे० ॥ २ ॥ सर्वानंदनिधानरूपममलं सत्त्वं सुखं मूर्तिमत्प्रादुष्कृत्य जनत्रयांतर

मृगक्रीडावनं पावनम् । संसारावटमग्नमुद्धरसि भो स्वीकृत्य तुर्याश्रमं वंदे श्रीनृहरे० ॥ ३ ॥ मूके गां दृशमंधके सुतनयं वंध्यासु चासून्मृते सौभाग्यं विधवासु पल्लवमहो दत्तं सुशुष्केन्धने । एवंभूत इयान् तवैष महिमा त्रैलोक्यसंस्थाक्षमो वंदे० ॥ ४ ॥ मुक्तावास मुमुक्षुकल्पविटपिन् भो कामिनां कामधुग्दारिद्र्यानलमेघदुष्कृतदवाग्ने तापिताराम ते । श्रुत्यन्विष्टरजःपदं श्रुतविवादातीततत्त्वं महद्वंदे श्रीनृहरे० ॥ ५ ॥ भो योगीश्वरभावितं तव पदं तीर्थाश्रयं सज्जनाजीवं कामिषु दैवतं च कमलालीलास्थलं निर्मलम् । विद्वद्वादकरंडकं सुकृतसंस्थानं महत्पावनं वंदे श्रीनृहरे० ॥ ६ ॥ वेदागोचर ते चरित्रममलं भक्तोऽत्र कः कृत्स्नशो वक्तुं वन्ध्य विनेन्दुभूतपवनात्मेतीह मूर्त्यष्टकम् । एतद्विश्वमयं तथान्यदिह वा ॐकाररूपेशितुर्वन्दे० ॥ ७ ॥ कुंडीदंडकरे प्रशांतममलं संन्यासिरूपं तव श्रीभीमामरजायुतिस्थितमजध्येयं शरण्यं मयि । ज्ञानं तारकमीशसत्यमनिशं ब्रह्मन् स्थिरीकुर्वंदो वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ८ ॥ इति श्रीमद्वासुदेवानंदसरस्वतीविरचितं नृसिंहसरस्वत्यष्टकं संपूर्णम् ॥

## ४३७. नृसिंहसरस्वतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विजयते जयते जय ते यतेरिह तमोहतमोहतमो नमः । हृदिकदायपदायसदा यदा तदुदयो न दयोनवियोनयः ॥ १ ॥ उदयते न यतेर्नयतेर्यदा मनसि कामनिकामगतिस्तदा । यदुदयो हृदयौकसितेसिते भवति योऽवति योगिवरावरान् ॥ २ ॥ भवति भावभवो विभवो यदा भवति कामनिकाममतिस्तदा । भवति मानवगानवदुत्तमे भवतिरोधिरतो विरतोत्तमे ॥ ३ ॥ तव सतां वसतां मनसानसाप्रपदयोः पदयोरजसांजसा । सुसहितः

सहितस्तव तावता यदवतारवताजनताविता ॥ ४ ॥ कृतफलं तु विहाय विहायसा सममजं भजतामज तामसात् । मिलति तारकमत्र कमत्रसत्पदरजो भ्रमहारि महारिसत् ॥ ५ ॥ तदजरामरकोशविलक्षणं सहजधीगुणवेत्तृकलक्षणम् । भुवनहेत्वघहृत्रिपुराधिकं तव न जातु पदं कुपुराधिकम् ॥ ६ ॥ त्रिविधभेदपरं समदृश्यते त्रिविधभेदपरं कमदृश्यते । पदमिदं यदुद्धिचनमुद्धिया सदनिदं प्रजहात्यघनुद्धिया ॥ ७ ॥ अज नमो जनमोहनमोहनः प्रियनियाजयते नयते नते । य इह वेदनिवेदनिवेदवेत्त्यज पदं जप तपदं पदम् ॥ ८ ॥ इति श्रीमद्वासुदेवानंदसरस्वतीविरचितं नृसिंहसरस्वतीस्तोत्रं संपूर्णम् ॥

## ४३८. कामाक्षीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ शिवोऽपि शक्तियुक्तश्चेत्प्रभुः कार्याय नान्यथा । स्वमायया विनेशस्य परस्यानुभवात्मनः ॥ १ ॥ न घटेतार्थसम्बन्धस्ततो माया परावरा । यस्याः प्रभावं संवक्तुं ब्रह्माद्या अप्यलं बलम् ॥ २ ॥ वैष्णवीयं महामाया सुरासुरमुनिस्तुता । शय्यां देवमयीं कृत्वा शेतेऽसाविति गीयते ॥ ३ ॥ सर्वे देवाश्च मुनयो विषमे यां स्तुवन्ति हि । सृष्टिस्थितिविनाशानां हेतुरेका सनातनी ॥ ४ ॥ विदुषोऽपि हठाच्चेतो महामोहाय यच्छति । अभक्तानां भक्तहेतुर्भक्तानां मुक्तिदा च सा ॥ ५ ॥ सर्वेष्वपि हि भूतेषु चेतनेत्युच्यते ततः । स्वात्मारामः शिवोऽप्यत्र रत्यर्थमनुधावति ॥ ६ ॥ माया चतुष्कपर्दाऽसौ युवतिर्नित्यनूतना । सुपेशा च घृतास्यादौ वस्तेस्य वयुनान्यपि ॥ ७ ॥ भक्तिश्रद्धाधृतिह्री श्रीधीमेधाद्यैश्च सत्सु या । तृष्णालक्ष्म्यार्तिभीनिद्रातन्द्रारूपैरसत्सु च ॥ ८ ॥ क्षणे क्षणे विमुह्यन्ति वशिनोऽप्यत्र योगिनः । सैषाऽनिर्व-

चनीयाऽर्च्या या कामाक्षीति विश्रुता ॥ ९ ॥ इति श्रीमद्वासुदेवानन्दसरस्वतीविरचितं कामाक्षीस्तोत्रं संपूर्णम् ॥

## ४३९. अमृतसंजीवनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अथापरमहं वक्ष्येऽमृतसंजीवनं स्तवम् । यस्यानुष्ठानमात्रेण मृत्युर्दूरात्पलायते ॥ १ ॥ असाध्याः कष्टसाध्याश्च महारोगा भयंकराः । शीघ्रं नश्यन्ति पठनादस्यायुश्च प्रवर्धते ॥ २ ॥ शाकिनीडाकिनीदोषाः कुदृष्टिग्रहशत्रुजाः । प्रेतवेतालयक्षोत्था बाधा नश्यन्ति चाखिलाः ॥ ३ ॥ दुरितानि समस्तानि नानाजन्मोद्भवानि च । संसर्गजविकाराणि विलीयन्तेऽस्य पाठतः ॥ ४ ॥ सर्वोपद्रवनाशाय सर्वबाधाप्रशान्तये । आयुःप्रवृद्धये चैतत् स्तोत्रं परममद्भुतम् ॥ ५ ॥ बालग्रहाभिभूतानां बालानां सुखदायकम् । सर्वारिष्टहरं चैतद्बलपुष्टिकरं परम् ॥ ६ ॥ बालानां जीवनायैतत् स्तोत्रं दिव्यं सुधोपमम् । मृतवत्सत्वहरणं चिरं जीवित्वकारकम् ॥ ७ ॥ महारोगाभिभूतानां भयव्याकुलितात्मनाम् । सर्वाधिव्याधिहरणं भयघ्नममृतोपमम् ॥ ८ ॥ अल्पमृत्युश्चापमृत्युः पाठादस्य प्रणश्यति । जलाग्निविषशस्त्रारिनखिशृङ्गिभयं तथा ॥ ९ ॥ गर्भरक्षाकरं स्त्रीणां बालानां जीवनप्रदम् । महारोगहरं नृणामल्पमृत्युहरं परम् ॥ १० ॥ बाला वृद्धाश्च तरुणा नरा नार्यश्च दुःखिताः । भवन्ति सुखिनः पाठादस्य लोके चिरायुषः ॥ ११ ॥ अस्मात्परतरं नास्ति जीवनोपाय ऐहिकः । तस्मात्सर्वप्रयत्नेन पाठमस्य समाचरेत् ॥ १२ ॥ अयुतावृत्तिकं वाथ सहस्रावृत्तिकं तथा । तदर्धं वा तदर्धं वा पठेदेतच्च भक्तितः ॥ १३ ॥ कलशे विष्णुमाराध्य दीपं प्रज्वाल्य यत्नतः । सायं प्रातश्च विधिवत्स्तोत्रमेतत्पठेत्सुधीः ॥ १४ ॥ सर्पिषा हविषा

वाऽपि संयावेनाथ भक्तितः। दशांशमानतो होमं कुर्यात्सर्वार्थसिद्धये ॥ १५ ॥ नमो नमो विश्वविभावनाय नमो नमो लोकसुखप्रदाय। नमो नमो विश्वसृजेश्वराय नमो नमो मुक्तिवरप्रदाय ॥ १६ ॥ नमो नमस्तेऽखिललोकपाय नमो नमस्तेऽखिलकामदाय। नमो नमस्तेऽखिलकारणाय नमो नमस्तेऽखिलरक्षकाय ॥ १७ ॥ नमो नमस्ते सकलार्तिहर्त्रे नमो नमस्ते विरुजप्रकर्त्रे। नमो नमस्तेऽखिलविश्वधर्त्रे नमो नमस्तेऽखिललोकभर्त्रे ॥ १८ ॥ सृष्टं देव चराचरं जगदिदं ब्रह्मस्वरूपेण ते सर्वं तत्परिपाल्यते जगदिदं विष्णुस्वरूपेण ते। विश्वं संहितये तदेव निखिलं रुद्रस्वरूपेण ते संसिच्यामृतशीकरैर्हर महारिष्टं चिरं जीवय ॥ १९ ॥ यो धन्वन्तरिसंज्ञया निगदितः क्षीराब्धितो निःसृतो हस्ताभ्यां जनजीवनाय कलशं पीयूषपूर्णं दधत्। आयुर्वेदमरीरचज्जनरुजां नाशाय स त्वं मुदा संसिच्या० ॥ २० ॥ स्त्रीरूपं वरभूषणांबरधरं त्रैलोक्यसंमोहनं कृत्वा पाययति स्म यः सुरगणान्पीयूषमत्युत्तमम्। चक्रे दैत्यगणान्सुधाविरहितान् संमोह्य स त्वं मुदा संसिच्या० ॥ २१ ॥ चाक्षुषोदधिसंप्लावभूवेदपझषाकृते। सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ॥ २२ ॥ पृष्ठमन्दरनिर्घूर्णनिद्राक्षकमठाकृते। सिञ्च सिञ्च० ॥ २३ ॥ याञ्चाछलबलित्रासमुक्तनिर्जरवामन। सिञ्च सिञ्च० ॥ २४ ॥ धरोद्धारहिरण्याक्षघातक्रोडाकृते प्रभो। सिञ्च सिञ्च० ॥२५॥ भक्तत्रासविनाशात्तचण्डत्वनृहरे विभो। सिञ्च सिञ्च० ॥ २६ ॥ क्षत्रियारण्यसंछेदकुठारकर रैणुक। सिञ्च० ॥ २७ ॥ रक्षोराजप्रतापाब्धिशोषणाशुग राघव। सिञ्च० ॥ २८ ॥ भूभारासुरसंदोहकालाग्ने रुक्मिणीपते। सिञ्च० ॥ २९ ॥ वेदमार्गरतानर्हविभ्रान्त्यै बुद्धरूपधृक्। सिञ्च० ॥ ३० ॥ कलिवर्णाश्रमास्पष्टधर्मर्द्ध्यै कल्कि-

रूपभाक् । सिद्ध० ॥ ३१ ॥ असाध्याः कष्टसाध्या ये महारोगा भयङ्कराः । छिन्धि तानाशु चक्रेण चिरं जीवय जीवय ॥ ३२ ॥ अल्पमृत्युं चापमृत्युं महोत्पातानुपद्रवान् । भिन्धि भिन्धि गदाघातैश्चिरं जीवय जीवय ॥ ३३ ॥ अहं न जाने किमपि त्वदन्यत्समाश्रये नाथ पदाम्बुजं ते । कुरुष्व तद्यन्मनसीप्सितं ते सुकर्मणा केन समक्षमीयाम् ॥ ३४ ॥ त्वमेव तातो जननी त्वमेव त्वमेव नाथश्च त्वमेव बन्धुः । विद्याधनागारकुलं त्वमेव त्वमेव सर्वं मम देवदेव ॥ ३५ ॥ न मेऽपराधं प्रविलोकय प्रभोऽपराधसिन्धोश्च दयानिधिस्त्वम् । तातेन दुष्टोऽपि सुतः सुरक्ष्यते दयालुता तेऽवतु सर्वदाऽस्मान् ॥ ३६ ॥ अहह विस्मर नाथ न मां सदा करुणया निजया परिपूरितः । भुवि भवान् यदि मे नहि रक्षकः कथमहो मम जीवनमत्र वै ॥ ३७ ॥ दह दह कृपया त्वं व्याधिजालं विशालं हर हर करवालं चाल्पमृत्यो करालम् । निजजनपरिपालं त्वां भजे भावयालं कुरु कुरु बहुकालं जीवितं मे सदाऽलम् ॥ ३८ ॥ न यत्र धर्माचरणं न दानं व्रतं न यागो न च विष्णुचर्चा । न पितृगोविप्रवरामरार्चा स्वल्पायुषस्तत्र जना भवन्ति ॥ ३९ ॥ क्लीं श्रीं क्लीं श्रीं नमो भगवते जनार्दनाय सकलदुरितानि नाशय नाशय क्ष्रौमारोग्यं कुरु कुरु ह्रीं दीर्घमायुर्देहि देहि स्वाहा ॥ अस्य धारणतो जापादल्पमृत्युः प्रशाम्यति । गर्भरक्षाकरं स्त्रीणां बालानां जीवनं परम् ॥ ४० ॥ शतं पञ्चाशतं शक्त्याथवा पञ्चाधिविंशतिम् । पुस्तकानां द्विजेभ्यस्तु दद्याद्दीर्घायुषाप्तये ॥ ४१ ॥ भूर्जपत्रे विलिख्येदं कण्ठे वा बाहुमूलके । संधारयेद्गर्भरक्षा बालरक्षा च जायते ॥ ४२ ॥ सर्वे रोगा विनश्यन्ति सर्वाबाधा प्रशाम्यति । कुदृष्टिजं भयं नश्येत्तथा

प्रेतादिजं भयम् ॥ ४३ ॥ मया कथितमेतत्तेऽमृतसंजीवनं परम् । अल्पमृत्युहरं स्तोत्रं मृतवत्सत्वनाशनम् ॥ ४४ ॥ इति सुदर्शनसंहितोक्तममृतसंजीवनस्तोत्रं संपूर्णम् ॥

## ४४०. बन्दीमोचनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीबन्दीमोचनमन्त्रस्य कण्वऋषिः । त्रिष्टुप् छन्दः ॥ ह्रीं बीजम् ॥ ह्रूं कीलकम् ॥ मम बन्दीमोचनार्थे जपे विनियोगः ॥ 'ॐ ह्रीं ह्रूं बन्दीदेव्यै नमः' ॥ इत्यष्टोत्तरशतं जपः ॥ बन्दीं देवीं नमस्कृत्य वरदाभयशोभिताम् ॥ तदङ्घ्रयां शरणं गच्छेत् शीघ्रं मोक्षं ददातु मे ॥ १ ॥ बन्दी कमलपत्राक्षी लौहश्रृङ्खल-भञ्जिनी । प्रसादं कुरु मे देवि शीघ्रं मोक्षं० ॥ २ ॥ त्वं बन्दी त्वं महामाया त्वं दुर्गा त्वं सरस्वती। त्वं देवी रजनी चैव शीघ्रं मोक्षं० ॥ ३ ॥ संसारतारिणी बन्दी सर्वकामप्रदायिनी । सर्वलोकेश्वरी देवी शीघ्रं मोक्षं० ॥ ४ ॥ त्वं ह्रीस्त्वमीश्वरी देवी ब्रह्माणी ब्रह्म-वादिनी ॥ त्वं वै कल्पक्षयं कर्त्री शीघ्रं मोक्षं० ॥ ५ ॥ देवी धात्री धरित्री च धर्मशास्त्रार्थभाषिणी। दुश्चाम्बरागिणी देवी शीघ्रं मोक्षं० ॥ ६ ॥ नमोऽस्तु ते महालक्ष्मि रत्नकुण्डलभूषिते । शिवस्यार्धा-ङ्गिनी चैव शीघ्रं मोक्षं० ॥ ७ ॥ नमस्कृत्य महादुर्गां भयादुत्ता-रिणीं शिवाम् । महादुःखहरां चैव शीघ्रं मोक्षं० ॥ ८ ॥ इदं स्तोत्रं महापुण्यं यः पठेन्नित्यमेव च । सर्वबन्धविनिर्मुक्तो मोक्षं स लभते क्षणात् ॥ ९ ॥ इति श्रीरुद्रयामलोक्तं बन्दीमोचनस्तोत्रं संपूर्णम् ॥

## ४४१. अश्विनीकुमारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ प्रपूर्वगौ पूर्वजौ चित्रभानू गिरा वां शंसामि तपसा ह्यनन्तौ । दिव्यौ सुपर्णौ विरजौ विमानावधिक्षिपन्तौ भुव-नानि विश्वा ॥ १ ॥ हिरण्मयो शकुनी सांपरायौ नासत्यदस्रौ

सुनसौ वैजयन्ती । शुक्लं वयन्तौ तरसा सुवेमावधिव्ययन्तावसितं विवस्वतः ॥ २ ॥ ग्रस्तां सुपर्णस्य बलेन वर्तिकाममुञ्चतावश्विनौ सौभगाय । तावत्सुवृत्तावनमन्तमाययावसत्तमा गा अरुणा उदावहत् ॥ ३ ॥ षष्टिश्च गावस्त्रिशताश्च धेनव एकं वत्सं सुवते तं दुहन्ति । नानागोष्ठा विहिता एकदोहनास्तावश्विनौ दुहतो धर्ममुक्थ्यम् ॥ ४ ॥ एकां नाभिं सप्तशता अराः श्रिताः प्रधिष्वन्या विंशतिरर्पिता अराः । अनेमिचक्रं परिवर्ततेऽजरं मायाश्विनौ समनक्ति चर्षणी ॥ ५ ॥ एकं चक्रं वर्तते द्वादशारं षण्णाभिमेकाक्षममृतस्य धारणम् । यस्मिन्देवा अधिविश्वे विषक्तास्तावश्विनौ मुञ्चतो मा विषीतनम् ॥ ६ ॥ अश्विनाविन्दुममृतं वृत्तभूयौ तिरोधत्तामश्विनौ दासपत्नी । हित्वा गिरिमश्विनौ गामुदाचरन्तौ तद्वृष्टिमह्नात्प्रथितौ बलस्य ॥ ७ ॥ युवां दिशो जनयथो दशाग्रे समानं मूर्ध्नि रथयानं वियन्ति । तासां यातमृषयोऽनुप्रयान्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ८ ॥ युवां वर्णान्विकुरुथो विश्वरूपांस्तेऽधिक्षियन्ते भुवनानि विश्वा । ते भानवोऽप्यनुसृताश्चरन्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ९ ॥ तौ नासत्यावश्विनौ वां महेऽहं स्रजं च यां बिभृथः पुष्करस्य । तौ नासत्यावमृतावृतावृधावृते देवास्तत्प्रपदे न सूते ॥ १० ॥ मुखेन गर्भं लभतां युवानौ गतासुरेतत्प्रपदेन सूते । सद्यो जातो मातरमत्ति गर्भस्तावश्विनौ मुञ्चतो जीवसे गाम् ॥ ११ ॥ स्तोतुं न शक्नोमि गुणैर्भवन्तौ चक्षुर्विहीनः पथि संप्रमोहः । दुर्गेऽहमस्मिन्पतितोऽस्मि कूपे युवां शरण्यौ शरणं प्रपद्ये ॥ १२ ॥ इति श्रीमहाभारते आदिपर्वण्यश्विनीकुमारस्तोत्रं संपूर्णम् ॥

## ४४२. ब्रह्मज्ञानावलीमालास्तोत्रम् ।

श्रीगणेशाय नमः ॥ सकृच्छ्रवणमात्रेण ब्रह्मज्ञानं यतो भवेत् । ब्रह्मज्ञानावलीमाला सर्वेषां मोक्षसिद्धये ॥ १ ॥ असंगोऽहमसंगोऽहमसंगोऽहं पुनः पुनः । सच्चिदानन्दरूपोऽहमहमेवाहमव्ययः ॥ २ ॥ नित्यशुद्धविमुक्तोऽहं निराकारोऽहमव्ययः । भूमानन्दस्वरूपोऽहमहमेवाहमव्ययः ॥ ३ ॥ नित्योऽहं निरवद्योऽहं निराकारोऽहमच्युतः । परमानन्दरूपोऽहमहमेवाहमव्ययः ॥ ४ ॥ शुद्धचैतन्यरूपोऽहमात्मारामोऽहमेव च । अखण्डानन्दरूपोऽहमहमेवाहमव्ययः ॥ ५ ॥ प्रत्यक्चैतन्यरूपोऽहं शान्तोऽहं प्रकृतेः परः । शाश्वतानन्दरूपोऽहमहमेवाहमव्ययः ॥ ६ ॥ तत्त्वातीतः परात्माऽहं मध्यातीतः परः शिवः । मायातीतः परं ज्योतिरहमेवाहमव्ययः ॥ ७ ॥ नामरूपव्यतीतोऽहं चिदाकारोऽहमच्युतः । सुखबोधस्वरूपोऽहमहमेवाहमव्ययः ॥ ८ ॥ मायातत्कार्यदेहादि मम नास्त्येव सर्वदा । स्वप्रकाशैकरूपोऽहमहमेवाहमव्ययः ॥ ९ ॥ गुणत्रयव्यतीतोऽहं ब्रह्मादीनां च साक्ष्यहम् । अनंतानन्दरूपोऽहमहमेवाहमव्ययः ॥ १० ॥ अन्तर्यामिस्वरूपोऽहं कूटस्थः सर्वगोऽस्म्यहम् । परमात्मस्वरूपोऽहमहमेवाहमव्ययः ॥ ११ ॥ निष्कलोऽहं निष्क्रियोऽहं सर्वात्माद्यः सनातनः । अपरोक्षस्वरूपोऽहमहमेवाहमव्ययः ॥ १२ ॥ द्वंद्वादिसाक्षिरूपोऽहमचलोऽहं सनातनः । सर्वसाक्षिस्वरूपोऽहमहमेवाहमव्ययः ॥ १३ ॥ प्रज्ञानघन एवाहं विज्ञानघन एव च । अकर्ताहमभोक्ताहमहमेवाहमव्ययः ॥ १४ ॥ निराधारस्वरूपोऽहं सर्वाधारोऽहमेव च । आप्तकामस्वरूपोऽहमहमेवाहमव्ययः ॥ १५ ॥ तापत्रयविनिर्मुक्तो देहत्रयविलक्षणः । अवस्थात्रयसाक्ष्यस्मि चाहमेवाहमव्ययः ॥ १६ ॥ दृग्दृश्यौ द्वौ पदार्थौ स्तः परस्परविल-

क्षणौ । दृग्ब्रह्म दृश्यं मायेति सर्ववेदान्तडिण्डिमः ॥ १७ ॥ अहं साक्षीति यो विद्याद्विविच्यैवं पुनः पुनः । स एव मुक्तः सो विद्वानिति वेदान्तडिण्डिमः ॥ १८ ॥ घटकुड्यादिकं सर्वं मृत्तिकामात्रमेव च । तद्वद्ब्रह्म जगत्सर्वमिति वेदान्तडिण्डिमः ॥ १९ ॥ ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः । अनेन वेद्यं सच्छास्त्रमिति वेदान्तडिण्डिमः ॥ २० ॥ अन्तर्ज्योतिर्बहिर्ज्योतिः प्रत्यग्ज्योतिः परात्परः । ज्योतिर्ज्योतिः स्वयंज्योतिरात्मज्योतिः शिवोऽस्म्यहम् ॥ २१ ॥ इति ब्रह्मज्ञानावलीमालास्तोत्रं संपूर्णम् ॥

## ४४३. नृसिंहस्तुतिः ।

श्रीगणेशाय नमः ॥ प्रलयरविकरालाकाररुक्चक्रवालं विरलयदुरुरोचीरोचिताशान्तराल । प्रतिभयतमकोपात्युत्कटोच्चाट्टहासिन् दह दह नरसिंहासह्यवीर्याहितं मे ॥ १ ॥ सरसरभसपादापातभाराभिरावप्रचकितचलसप्तद्वन्द्वलोकस्तुतस्त्वम् । रिपुरुधिरनिषेकेणैव शोणांघ्रिशालिन् दह दह नरसिंहासह्यवीर्याहितं मे ॥ २ ॥ तव घनघनघोषो घोरमाघ्राय जंघापरिघमलघुमूरुव्याजतेजोगिरिं च । घनविघटितमागाद्दैत्यजंघालसंघो दह दह नरसिंहासह्यवीर्याहितं मे ॥ ३ ॥ कटकिकटकराजद्धाटकाग्र्यस्थलाभा प्रकटपटतटित्ते सत्कटिस्थातिपट्वी । कटुककटुकदुष्टाटोपदृष्टिप्रमुष्टौ दह दह नरसिंहासह्यवीर्याहितं मे ॥ ४ ॥ प्रखरनखरवज्रोत्खातरूक्षादिवक्षःशिखरिशिखररक्तैराक्तसन्दोहदेह । सुवषलिभशुभकुक्षे भद्रगम्भीरनाभे दह दह नरसिंहासह्यवीर्याहितं मे ॥ ५ ॥ स्फुरयति तव साक्षात्सैव नक्षत्रमाला क्षपितदितिजवक्षोव्याप्तनक्षत्रमार्गम् । अरिदरधर जान्वासक्तहस्तद्वयाहो दह दह नरसिंहा-

सह्यवीर्योहितं मे ॥ ६ ॥ कटुविकटसटौघोद्घट्टनाद् भ्रष्टभूयोघनपटलविशालाकाशलब्धावकाशम् । करपरिघविमर्दप्रोद्यमं ध्यायतस्ते दह दह नरसिंहासह्यवीर्योहितं मे ॥ ७ ॥ हयलुठदलघिष्ठोत्कण्ठदष्टोष्ठविद्युत्सट शठकठिनोरःपीठभित्सुष्ठु निष्ठाम् । पठति नु तव कण्ठाधिष्ठघोरान्त्रमाला दह दह नरसिंहासह्यवीर्योहितं मे ॥ ८ ॥ हतबहुमिहिराभासह्यसंहाररंहो हुतवह बहुहेतिह्रेपिकानन्तहेति । अहितविहितमोहं संवहन् सैंहमास्यं दह दह नरसिंहासह्यवीर्योहितं मे ॥ ९ ॥ गुरुगुरुगिरिराजत्कन्दरान्तर्गते वा दिनमणिमणिश्रृंगे वांतवह्निप्रदीप्ते । दधदतिकटुदंष्ट्रे भीषणोज्जिह्ववक्त्रे दह दह नरसिंहासह्यवीर्योहितं मे ॥ १० ॥ अपरितविबुधाब्धिध्यानधैर्यं विदध्यद्विविधविबुधधीश्रद्धापितेन्द्रारिनाशम् । निदधदतिकटाहोद्घट्टनेद्धाट्टहासं दह दह नरसिंहासह्यवीर्योहितं मे ॥ ११ ॥ त्रिभुवनतृणमात्रत्राणतृष्णं तु नेत्रत्रयमतिलघिताचिर्विष्टपाविष्टपादम् । नवतररविरत्नं धारयन् रूक्षवीक्षं दह दह नरसिंहासह्यवीर्योहितं मे ॥ १२ ॥ भ्रमदभिभवभूभृद्भूरिभूभारसद्भिद्भिदभिनव (विभवभ्रू) विदभ्रूविभ्रमादभ्रशुभ्र । ऋभुभवभयभेत्तर्भासि भोभोविभाभिर्दह दह नरसिंहासह्यवीर्योहितं मे ॥ १३ ॥ श्रवणखचितचंचत्कुण्डलोच्चण्ड (लोल) गण्ड भ्रुकुटिकटुललाटश्रेष्ठनासारुणोष्ठ । वरद सुरद राजत्केसरोत्सारितारे दह दह नरसिंहासह्यवीर्योहितं मे ॥ १४ ॥ कचि (प्रवि) कचकचद्राजद्रत्नकोटीरशालिन् गलगतगलदुस्रोदाररत्नांगदाढ्य । कनककटककांचीशिंजिनीमुद्रिकावन् दह दह नरसिंहासह्यवीर्योहितं मे ॥ १५ ॥ अरिदरमसिखेटौ बाणचापे गदां सन्मुसलमपि कराभ्यामंकुशं पाशवर्यम् । करयुगल-

धृतात्रस्त्वग्विभिन्नारिवक्षो दह दह नरसिंहासह्यवीर्याहितं मे ॥१६॥ चट चट चट दूरं मोहय भ्रामयारीन् कडि कडि कडि कामं ज्वालय स्फोटयस्व। जहि जहि जहि वेगं शात्रवं सानुबन्धं दह दह नरसिंहासह्यवीर्याहितं मे ॥ १७ ॥ विधिभवविबुधेश-भ्रामकाग्निस्फुलिंगप्रसविविकटदंष्ट्रोज्जिह्ववक्त्र त्रिनेत्र। कल कल कल कामं पाहि मां ते सुभक्तं दह दह नरसिंहासह्यवीर्याहितं मे ॥ १८ ॥ कुरु कुरु करुणां तां सांकुरां दैत्यपोते दिश दिश विशदां मे शाश्वतीं देव दृष्टिम्। जय जय जय मूर्तेऽनार्त जेतव्यपक्षं दह दह नरसिंहासह्यवीर्याहितं मे ॥ १९ ॥ स्तुतिरियमहितघ्नी सेविता नारसिंही तनुरिव परिशान्ता मालिनी साभितोऽलम्। तदखिलगुरुमाग्र्यश्रीदरूपा लसद्भिः सुनियमनयकृत्यैः सद्गुणैर्नित्य-युक्ता ॥ २० ॥ लिकुचतिलकसूनुः सद्धितार्थानुसारी नरहरि-नुतिमेतां शत्रुसंहारहेतुम्। अकृत सकलपापध्वंसिनीं यः पठेत्तां व्रजति नृहरिलोकं कामलोभाद्यसक्तः ॥ २१ ॥ इति श्रीमत्कवि-कुलतिलक-त्रिविक्रमपंडिताचार्यसुत–श्रीमन्नारायणपंडिताचार्यकृता श्रीनृसिंहस्तुतिः संपूर्णा ॥

## ४४४. करुणालहरी।

श्रीगणेशाय नमः॥ विषीदता नाथ विषानलोपमे विषादभूमौ भवसागरे विभो। परं प्रतीकारमपश्यताधुना मयायमात्मा भवते निवेदितः ॥ १ ॥ भवानलज्वालविलुप्तचेतनः शरण्य तेऽङ्घ्रिं शरणं भयादयाम्। विभाव्य भूयोऽपि दयासुधाम्बुधे विधेहि मे नाथ यथा यथेच्छसि ॥ २ ॥ विहाय संसारमहामरुस्थलीमलीकदेहादि-मिलन्मरीचिकाम्। मनोमृगो मे करुणामृताम्बुधे विगाढुमीश

त्वयि गाढमीहते ॥ ३ ॥ त्वदङ्घ्रिफुल्लाम्बुजमध्यनिर्गलन्मरन्द-निःस्यन्दनितान्तलम्पटः । मनोमिलिन्दो मम मुक्तचापलस्त्वदन्य-मीशान तृणाय मन्यते ॥ ४ ॥ जगत्त्रयत्राणविधौ धृतव्रतं तवाङ्घ्रि-राजीवमपास्य ये जनाः । शरण्यमन्यन्मृगयन्ति यान्ति ते नितान्तमीशान कृतान्तदेहलीम् ॥ ५ ॥ रमामुखाम्भोजविकासन-क्षमो जगत्त्रयोद्बोधविधानदीक्षितः । कदा मदज्ञानविभावरीं हरे हरिष्यति त्वन्नयनारुणोदयः ॥ ६ ॥ सुरासुरस्वान्तचकोरचुम्बिता समस्तसंतापचयापनोदिनी । महानिशीथे मम मानसे कदा स्फुरिष्यति त्वन्मुखचन्द्रचन्द्रिका ॥ ७ ॥ सुयौवनापाण्डुरगण्ड-मण्डलप्रतिस्फुरत्कुण्डलताण्डवाद्भुतम् । गदाग्रज त्वन्मुखफुल्ल-पङ्कजं कदा मदक्ष्णोरतिथीभविष्यति ॥ ८ ॥ सुरापगातुङ्गतरङ्ग-चालितां सुरासुरानीकललाटलालिताम् । कदा दधे देव दया-मृतोदधे भवत्पदाम्भोरुहधूलिधोरणीम् ॥ ९ ॥ महाजवाश्छिन्न-विवेकरश्मयो मदोद्धता देव मदक्षवाजिनः । हरे समासाद्य तवाङ्घ्रिमन्दुरामपास्तवेगा दधतां सुशीलताम् ॥ १० ॥ पुरातनानां वचसामगोचरं महेशितारं पुरुषोत्तमं पतिम् । अपास्य तं त्वां निरपत्रपा सती सती मतिर्मे कथमन्यमेष्यति ॥ ११ ॥ न जाग्रता स्वप्नगतेन वा मया समीहितं ते करुणालवादृते । गिरं मदीयां यदि वेत्सि तात्त्विकीं तदा जगन्नायक मामुरीकुरु ॥ १२ ॥ अयि दीनतरं दयानिधे दुरवस्थं सकलैः समुज्झितम् । अधुनापि न मां निभालयन् भजसे हा कथमश्मचित्तताम् ॥ १३ ॥ सुमहन्ति जगन्ति बिभ्रतस्तव यो नाविरभून्मनागपि । स कथं परमाप्त-देहिनां परमाणोर्मम धारणे श्रमः ॥ १४ ॥ नितरां विनयेन पृच्छते सुविचार्योत्तरमत्र यच्छ मे । करितो गिरितोऽप्यहं गुरुस्त्वरितो

नोद्धरसे यदद्य माम् ॥ १५ ॥ न धनं न च राज्यसंपदो नहि विद्यामिदमेकमर्थये । मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ॥ १६ ॥ अयमत्यधमोऽपि निर्गुणो दयनीयो भवता दयानिधे । वसतां फणिनां विषानलं किमु नानन्दयिता हि चन्दनः ॥ १७ ॥ क्षुधितस्य नहि त्रपास्ति मे प्रतिरथ्यं प्रतिगृह्णतः कणान् । अकलङ्क यशस्करं न ते भवदीयोऽपि यदन्यमृच्छति ॥ १८ ॥ नितरां नरकेऽपि सीदतः किमु हीनं गलितत्रपस्य मे । भगवन्कुरु सूक्ष्ममीक्षणं परतस्त्वां जनता किमालपेत् ॥ १९ ॥ नरके निजकर्मकल्पिता भजतो मे महतीरपि व्यथाः । इदमेकमसह्यमीक्षका यदनाथं निगदन्ति मां विभो ॥ २० ॥ मृगदन्तिमुखान्मया सह प्रतिरुद्धान्भवजालबन्धने । तव मामपहाय मुञ्चतः करुणा किं न भिनत्ति मानसम् ॥ २१ ॥ निरुपाधिजनार्तिहारिणं भगवंस्त्वामवगत्य तत्त्वतः । कृतपुण्यचयावहेलनं कथमब्जेक्षण मामुपेक्षसे ॥ २२ ॥ सततं निगमेषु शृण्वता वरद त्वां पतितानुपावनम् । पुरु पापमुपास्यतेऽनिशं त्वयि विश्वासधिया मया विभो ॥ २३ ॥ सुकृतं न कृतं पुरा कदाप्यथ सर्वं कृतमेव दुष्कृतम् । अधुना गलितह्रिया मया भगवंस्त्वां प्रति किं निगद्यताम् ॥ २४ ॥ मदकामविमोहमत्सरा रिपवस्त्वत्पुर एव विह्वलम् । धृतशार्ङ्गगदारिनन्दक प्रतिकर्षन्ति कथं न लज्जसे ॥ २५ ॥ अयि गर्तमुखे गतः शिशुः पथिकेनापि निवार्यते जवात् । जनकेन पतन्भवार्णवे न निवार्यो भवता कथं विभो ॥ २६ ॥ सुकृतप्रिय माऽन्यथास्तु ते सुकृतिभ्यः सुखदस्य सुप्रथा । अपि पापमबिभ्रतस्तु मां तव विश्वंभरनाम दुर्लभम् ॥ २७ ॥ वचनैः पुरुषैरिह प्रभो यदि रोषं समुपागतोऽसि मे । मुखरं कृतकोटिकल्मषं करुणाब्धे जगतो-

ऽपसारय ॥ २८ ॥ यदि वीक्ष्य ददासि मत्कृतिं न मयैव प्रतिगृह्यते तदा । अथ चेन्निजमाशयं प्रभो परितुष्टः शिरसा वहामि तव् ॥ २९ ॥ पतितोऽप्यतिदुर्गतोऽपि सन्नकृतज्ञो निखिलागसां पदम् । भवदीय इतीरयंस्त्वया दयनीयस्त्रपयैव केवलम् ॥ ३० ॥ सुकृतप्रकृता जने त्वया कृतया किं कृपया कृपानिधे । यदि मादृशि सा विधीयते तव कीर्तिर्विद कीदृशी तदा ॥ ३१ ॥ अयि शैशवलालितः शिशुः प्रतिबुद्धो जनकेन ताड्यते । न कदापि च लालितस्त्वया किमु ताड्यो भगवन्कुकर्मभिः ॥ ३२ ॥ अहमेव हि दोषदूषितो भगवंस्त्वां समुपालभे मुधा । रमणीविरहज्वरज्वलन्नमृतांशुं कुमतिर्विनिन्दति ॥ ३३ ॥ करुणाकर दुर्दशाकुलं पतितालम्बन पापपञ्जरम् । अमृताम्बुनिधे महाज्वरं नहि जह्या जगदीश जातु माम् ॥ ३४ ॥ कटुजल्पनसल्पकस्य मे नहि ते कल्पयतु क्रुधं विभो । कुपितातुरबालभाषितं किमु गृह्णन्ति मनाङ्महाशयाः ॥ ३५ ॥ भुजगाहितकल्पितध्वजं स्फुरदाशाभुजगालिवेल्लितम् । जटिलज्वरकुञ्जराङ्कुश ज्वरजुष्टं न जहीहि जातु माम् ॥ ३६ ॥ न वदामि न दुष्कृतं मया कृतमित्युक्तिमिमां तु मे शृणु । मम भीतिमनीनशद्विभो पतितोद्धारक नाम तावकम् ॥ ३७ ॥ अपि शर्वपितामहादिभिर्भजनीयः पुरुषोत्तमो हि यः । तमुपालभमानमुद्धतं धिगिमं मां धिगिमां धियं मम ॥ ३८ ॥ अथ सर्वमिदं मयोज्झितं भवतोऽन्यन्नहि किंचिदर्थये । मम मानसगोचरीभवत्वरविन्दाक्ष तवाद्भुतं वपुः ॥ ३९ ॥ हरिनीलमयावनीतले वरवृन्दाविपिने विलासिनि । मणिमण्डपमध्यविस्फुरद्विबुधक्ष्मारुहमूलमाश्रितम् ॥ ४० ॥ शिखिपिच्छमहामणिस्फुर-

न्मुकुटाकुञ्चितकान्तकुन्तलम् । कमनीयतरालकावलिभ्रमणभ्राजिललाटसुन्दरम् ॥ ४१ ॥ शरदिन्दुसहोदराननं दलदम्भोजपलाशलोचनम् । अरुणाधरकान्तिदन्तुरस्फुटदन्तांशुविकासिताम्बरम् ॥ ४२ ॥ दरपाण्डुरगण्डमण्डलप्रतिसर्पत्कमनीयकुण्डलम् । मणिमौक्तिकमञ्जुमञ्जरीमहनीयद्युतिरञ्जितश्रुति ॥ ४३ ॥ पृथुवर्तुलमौक्तिकावलीसुषमावेल्लितकान्तकन्धरम् । हरिनीलगिरिद्युतिद्रुहा कमलामन्दिरवक्षसाञ्चितम् ॥ ४४ ॥ चरणाब्जनखावलम्बिनीं भुजगाकारभुजान्तरागताम् । निबिडाभ्रमिव क्षणप्रभां बृहदुत्फुल्लवनामलस्रजम् ॥ ४५ ॥ मणिकङ्कणकान्तिमांसलं दरफुल्लाम्बुजसुन्दरद्युति । पतितोद्धरणे दृढव्रतं कमनीयं करयोर्युगं दधत् ॥ ४६ ॥ वररत्नमयाङ्गुलीयकावलिशोभामिलिताङ्गुलीगणैः । मुहुराकुलितेन वेणुना वशयत्प्राणभृतां मनःश्रुतीः ॥ ४७ ॥ उदरद्युतिनिम्नगोच्छलल्लहरीरूपकरोमराजिकम् । पशुपालविलासिनीलसन्नयनाकर्षणनाभिनिम्नितम् ॥ ४८ ॥ कनकद्रवगौरमम्बरं दधतोरुद्वितयेन सुन्दरम् । उदयन्मणिनूपुरप्रभासरणिश्रेणिजटालजानुकम् ॥ ४९ ॥ अरिगीर्णगजेन्द्रगोपने दधता जाङ्घिकतामलौकिकीम् । त्रिजगन्महनीयमूर्तिना वरजङ्घायुगलेन शोभितम् ॥ ५० ॥ कुलिशाङ्कुशकम्बुसाम्बुजध्वजचक्राद्यभिरामलक्ष्मणा । अरुणारुणकोमलत्विषा कमनीयेन तलेन राजितम् ॥ ५१ ॥ विधिशर्वमुखामरस्फुरन्मुकुटोत्क्षिप्तमणिप्रभाकुलम् । नखचन्द्रमयूखमूर्च्छिताखिलतापं पदयोर्युगं दधत् ॥ ५२ ॥ सरतः सरणौ सतो बहिः स्वपतो वाऽऽलपतो गृहान्तरे । वपुरीदृशमीश तावकं हृदयालम्बनमस्तु मे सदा ॥ ५३ ॥ नवनीरदनीलिमद्युतिर्नमनीयो निगमैर्निरन्तरम् । निरये निपतन्तमाशु मां

नयनेनापि सनाथयेद्विभुः ॥ ५४ ॥ प्रणिपत्य हरे भवन्तमद्धा विनिबद्धाञ्जलिरेकमेव याचे । जनुरस्तु कुले कृषीवलानामपि गोविन्दपदारविन्दभावः ॥ ५५ ॥ वाचा निर्मलया सुधामधुरया यां नाथ शिक्षामदास्तां स्वप्नेऽपि न संस्मराम्यहमहंभावावृतो निस्त्रपः । इत्यागःशतशालिनं पुनरपि स्वीयेषु मा बिभ्रतस्त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तः परः ॥ ५६ ॥ पातालं व्रज याहि वा सुरपुरीमारोह मेरोः शिरः पारावारपरम्परां तर तथाप्याशा न शान्ता तव । आधिव्याधिजरापराहत यदि क्षेमं निजं वाञ्छसि श्रीकृष्णेति रसायनं रसय रे शून्यैः किमन्यैः श्रमैः ॥ ५७ ॥ वज्रं पापमहीभृतां भवगदोद्रेकस्य सिद्धौषधं मिथ्याज्ञाननिशाविशालतमसस्तिग्मांशुबिम्बोदयः । क्रूरक्लेशमहीरुहामुरुतरज्वालाजटालः शिखी द्वारं निर्वृतिसद्मनो विजयते कृष्णेति वर्णद्वयम् ॥ ५८ ॥ विशालविषयाटवीवलयलग्नदावानलप्रसृत्वरशिखावलीविकलितं मदीयं मनः । अमन्दमिलदिन्दिरे निखिलमाधुरीमन्दिरे मुकुन्दमुखचन्दिरे चिरमिदं चकोरायताम् ॥ ५९ ॥ सुरस्रोतस्विन्याः पुलिनमधितिष्ठन्नयनयोर्विधायान्तर्मुद्रामथ सपदि विद्राव्य विषयान् । विधूतान्तर्ध्वान्तो मधुरमधुरायां चिति कदा निमग्नः स्यां कस्यांचन नवनभस्याम्बुदरुचि ॥ ६० ॥ इति पण्डितराजश्रीजगन्नाथविरचिता करुणालहरी संपूर्णा ॥

## ४४५. शान्तिपाठः ।

ॐ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ १ ॥ ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रि-

याणि च । सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ २ ॥ ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ३ ॥ ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ ४ ॥ ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ॥ ५ ॥

ॐ शांतिः शांतिः शांतिः ॥

इति शांतिपाठः संपूर्णः ॥

ॐ